TRIVANDRUM SANSKRIT SERIES

No. CXVII

Śrī Citrodayamañjarī

No. VI.




# सरस्वतीकण्ठाभरणम् ।

# SARASVATĪKAṆṬHĀBHARAṆA

## Part I.

EDITED BY

K. SĀMBAŚIVA ŚĀSTRI,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*



UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE

TRIVANDRUM: PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS, 1936.

TRIVANDRUM SANSKRIT SERIES.
No. CXVII.
Śrī Citrodayamañjarī.
No. VI.

# THE SARASVATĪKAṆṬHĀBHARAṆA

OF

## Śrī Bhojadeva

with the commentary

OF

## Śrī Nārāyaṇadaṇḍanātha

**Part I.**



EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.



TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1935.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११७.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः ६.

श्रीभोजदेवप्रणीतं

# सरस्वतीकण्ठाभरणं

श्रीनारायणदण्डनाथविरचितया

हृदयहारिण्याख्यया वृत्त्या

समेतं

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

प्रथमोऽध्यायः ।

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

कोल्लम्बाब्दाः ११९०. क्रैस्ताब्दाः १९३५.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवोदितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वाञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उः फुल्लत्सुवृ तिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

The Sarasvatīkaṇṭhâbharaṇa a work on grammar by Bhojarāja along with the Vṛtti Hṛdayahāriṇī of Daṇḍa-nārāyaṇa Bhaṭṭa is of course a singular ornament (Ābharaṇa) to our Śrī Citrodaya Mañjarī Series. Though, Vardhamāna, Kṣīraśvāmin and many other depositaries of learning have quoted the work as authority, in Kerala alone can we obtain a complete manuscript of this work. This is not a matter of small pride to us the inhabitants of Kerala. Nārāyaṇa Bhaṭṭapāda who was an erudite scholar in grammar and a staunch follower of the system of Pāṇini has cited the work as authority on occasions more than one. In view of this fact we are given to think that this work of Bhoja has long been considered as an authority on grammar in Kerala. As time advanced, owing to the extreme popularity of the interpretations of Pāṇini's system those who were contented with that much began to assume a nonchalant attitude towards the works of post-Paninian original writers. It is due to the very same fact that we are neither able to secure ample copies of the manuscript even in Kerala nor to equip ourselves with knowledge on grammar from sources manifold. In spite of this state of affairs, a complete manuscript of the work together with the Vṛtti obtained from the treasure house of valuable manuscripts belonging to His Most Gracious Highness the Maharaja has encouraged us much for the present publication and thus this department depending much for its sustenance on the Palace Library has accomplished something creditable.

The transcript which we have obtained from Oriental Manuscripts Library, Madras, and the manuscript received from Brahmaśri Venkittarama Sastri, Shenkotta, containing the sutras alone could be made use of in noting down different readings in Sūtrās. A third copy of the manuscript belonging to Kutalloor Brahmadattan Namboori, though contains the Vṛtti also the first portion being mutilated is preserved for use on further occasion.

THE SYSTEM. Even though this grammar serves us as a touch stone to test the correctness of words, it is not quite in unison with the canons of Pāṇini's system. With an aim to dictate the grammatical principles for all words in seven chapters, this work adopts sūtras to serve the purpose of Vārtika and Gaṇapāṭha and thus avoids an eighth

chapter unlike the work of Pāṇini. The fact that Bhoja copies down sūtras like 'कर्तुरीप्सिततमं कर्म' from Pāṇini's work makes it clear that our author held the world renowned grammarian in high esteem and admiration.

In this first part consisting of the first chapter there are four Pādas which respectively deal with Samjña, Paribhāṣā, Kṛtpratyaya, and Upapadakṛtpratyaya. To those who are acquainted with Sarasvatīkaṇṭhābharaṇa a work on poetics by Bhoja, this work with the same appellation will be a source of great astonishment. But those who go deeper into the matter will be led to think as follows—Only something equally formed of word and meaning can be a befitting embellishment to Sarasvathi whose form is constituted by Śabda and Artha. Hence the two works one (this publication) on grammar and the other on poetics with a common designation constitute a complete ornamentation; this fact goes to prove the longsightedness of the author.

The Vṛtti called Hṛdayahāriṇī really captivates the heart of scholars by its excellent manner of interpretation, suitable illustrations and quotations from a large number of authoritative works. In the absence of other expositary works this unique gloss, beyond all doubt, is a very valuable aid without which the understanding of the work turns an impossibility.

THE AUTHOR From the following colophon found at the end of the transcript obtained from Madras,

'इति श्रीमहाराजाधिराजपरमेश्वरभोजदेवविरचितं सरस्वतीकण्ठाभरणाख्यं व्याकरणं सम्पूर्णम् ।"

we know that Bhoja was the author of Sarasvatīkaṇṭhābharaṇa. It is an established fact that Bhoja the author of sūtras was a benignant patron of Sanskṛt men of letters. It is a matter of keen contest among envious people that when he had to discharge the responsible duties of a king how Bhojarāja himself managed to produce such authoritative works which involve hard labour and continuous industry. Nothing can be impossible to anybody provided he is an erudite scholar and hence the work commands the unlimited admiration and the profound respect of the learned world free from jealousy. Many a historian concurs on the point that Bhoja the author of works on Sāhitya, Vyākaraṇa, Jyotiṣa and other branches of literature lived in the 11th Century A. D. Since no evidence is obtained to controvert this fact we do not mean to make any further comment upon it.

No clear and suggestive evidence is before us to establish who the author of the Vṛtti was and when and where did he live. Depending fully upon inference we wish to point out the following as worthy of deliberation. From the epithet Daṇḍanātha, we may infer that he might have been the Commander-in-Chief or Judge or other high officer in the court of King Bhoja. Moreover an exposition of the work like the present could be correct and complete only by a dependent of Bhoja. If this inference can be enhanced by other evidences we may conclude that the Vṛttikāra was a contemporary of Bhoja (11th century A. D.) and lived in Dhār (the capital of Bhoja).

Vidvajjanavallabha an unknown work on astronomy by Bhojarāja is secured by our Department.

Hoping that we will be able to publish in full the Sarasvatīkaṇṭhābharaṇa of Bhoja, deserving much deliberation and criticism and awaiting for such an auspicious occasion we place the work before the enlightened public.

K. SĀMBAŚIVA ŚĀSTRĪ.

॥ श्रीः ॥

इदमेकमपूर्वमाभरणमस्मद्ग्रन्थावलेः श्रीचित्रोदयमञ्जर्याः, यद् महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचितं सरस्वतीकण्ठाभरणं व्याकरणं दण्डनाथनारायणभट्टसमुद्धृतया हृदयहारिण्या वृत्त्या समेतम् । वर्धमानक्षीरस्वामिप्रभृतिभिरनेकैराचार्यैः परिगृह्यमाणमपि श्रीभोजदेवीयं शब्दानुशासनमद्यत्वे केरलेष्वेव समुपजातमातृकोपलम्भं प्रसीदतीति न नः कश्चिदयं केरलीयानां नाभिमानः । पाणिनीयप्रस्थानमनुरुन्धानैरपि वैयाकरणशिरोमणिभिः श्रीमन्नारायणभट्टपादैरसकृदयं भोजदेवः स्वकीये प्रक्रियासर्वस्वनामनि व्याकरणग्रन्थे प्रमाणीक्रियत इति मन्ये केरलीयानामिदमीयं व्याकरणं बहोः कालात् प्रागासीत किमपि प्रमाणप्रकाण्डम् । अथच गच्छति काले पाणिनीयप्रस्थानव्याख्यापरम्परायाः समाक्रामति च भूरितरे प्रचारे तावन्मात्रपरितृप्तचेतसामभवदिव ततः प्राक्तनेषु व्याकरणग्रन्थेषु क्वापि गजनिमीलिका, यया केरलेष्वपि तदिदं भोजदेवीयं व्याकरणं न वयं बहुलमुपलब्धुं पर्याप्नुमः । नापि च बहुमुखया शब्दव्युत्पत्त्या दत्तहस्तावलम्बा भवामः । सत्यप्येवं वस्तुतत्त्वे महोन्नतमहामहिमश्रीशालिनामस्मन्महाराजानामपरिमितग्रन्थरत्नभाण्डागाराद् ग्रन्थशालादस्य समग्रस्य सवृत्तेरुपलब्धिरस्य प्रसिद्धीकरणस्य चोदिकास्माननुददिति कृतं कृतमनेनाधिकरणेन तदुपजीविना ।

मद्रनगरीयप्राच्यग्रन्थशालात् प्रतिरूपितसम्पादितं, एतत्संस्थानीयचेङ्कोट्टवास्तव्यब्रह्मश्री-वेङ्कटरामशास्त्रिणां ग्रन्थालयात् सङ्गृहीतं च मातृकान्तरे सूत्रमात्रपर्याप्ते तावत्यंशे पाठभेदकरणाय सोपयोगे कृते । तृतीयं च मातृकान्तरं ब्रह्मश्री-कूटल्लूर्-ब्रह्मदत्तनम्पूरिस्वामिकं समेतमपि वृत्त्योपक्रमविकलमुपरिष्टादुपयोगाय संरक्ष्यते ।

इदं व्याकरणमतिमहतः शब्दराशेः साधुताबोधकमपि स्वयमाकृत्या भवत्यपाणिनीयम् । सप्ताध्याय्या सर्वानपि साधुशब्दान् व्याचिकीर्षदिदं वा-

प्रस्थानम् ।

र्त्तिकगणपाठादिसाध्यमानस्य तत्तत्प्रपञ्चनस्य रूपान्तरीकृतसूत्रसमुपबृंहणात् काममष्टमं कमप्यध्यायं नावश्यं पश्यति । न च नैतावता तावत्यामेवाकृतौ 'कर्तुरीप्सिततमं कर्म'त्यादीनि बहूनि पाणिनीयानि सूत्राणि तथैव समुपयुञ्जानो नूनमादितबहुमतिरयं भग-

वत्याचार्ये पाणिनाविति पश्यतामपरोक्षम् । अथमेऽस्मिन् भागे प्रथमाध्याय-परिपुटिते संज्ञया, परिभाषया, अनुपपदकृत्प्रत्ययेन, उपपदकृत्प्रत्ययेनेति भवति कश्चिदयं विभागश्चतुर्णां पादानामित्यपि स्फुटम् । सुप्रसिद्धेऽलङ्कारनिबन्धने सरस्वतीकण्ठाभरणाभिधाने श्रीमद्भोजराजीयेऽयथावदवगततत्त्वानां स्यादिदं तत्समाननामधेयमाभरणमद्भुताय महते । परन्तु किञ्चिदिव चक्षुषी उन्मिष्य निमिषतां भवेदिदं यथार्थं प्रभातम्—यत् शब्दार्थोभयाकृतेः सरस्वत्याः शब्देऽर्थे च कामं निधीयमानं समुज्ज्वलं किमप्याभरणं भवति परिपूर्णं, तत् शब्देनेदम्, अर्थेन चालङ्कारनिबन्धनमिति पुष्कले कस्मिंश्चिदाभरणे समुचितेनार्धार्धविभागेन क्रियमाणमिदं समाननाम कवेरस्य सार्वभौमस्य युक्तं दीर्घदर्शितां समुपपादयति इति ।

वृत्तिश्च नाम्ना हृदयहारिणी निरूपणभङ्ग्या सङ्गतोदाहरणघटनया प्रमाणभूतबहुग्रन्थादरेण च वस्तुतो हृदयहारिणी विदुषाम् । अद्वितीयेयं वृत्तिरनुपश्रुतविवरणान्तरा सुदृढमेषा सूत्राणां महान् कश्चिदुपष्टम्भः, येन विना निरवलम्बानां गमनमिह सुतरामशक्यम् ।

मूलभूतस्य च सरस्वतीकण्ठाभरणस्य कर्ता श्रीभोजदेव इति मद्रनगरीयग्रन्थशालानीतमातृकायाः परिसमाप्तौ "इति श्रीमहाराजाधिराजपरमेश्वरभोजदेवविरचितं सरस्वतीकण्ठाभरणाख्यं व्याकरणं सम्पूर्णम् ॥"

कर्ता । इति दृश्यमानादुपसंहारवाक्याद् विज्ञायते । सूत्रकारश्चासौ श्रीराजाधिराजमहाराजभोजदेवः सुप्रसिद्धः कवीनां पण्डितानां च परमं किमपि प्रोत्साहनपरमुपजीवनस्थानमासीदिति निश्चप्रचम् । जाग्रति परचापादिनि दुर्वहे माहाराज्ये कस्यापि महाकवेर्महापण्डितस्य च स्वयमेकासिकामात्रसाध्याः कथममी प्रमाणग्रन्था अमुना निरमायिषतेति भवति महान् विवादो मत्सरिचेतसाम् । लोकोत्तरवैदुष्ये हि प्रसीदति किमशक्यं कस्य वेति विदितवेदितव्यानां तु निरसूयानामत्र बहुमान एव मानाधिकः सम्पद्यते । साहित्ये व्याकरणे ज्योतिषे तन्त्रान्तरे च समुपनिबद्धनैकप्रबन्धानां भोजदेवानां जीवितसमयस्तु क्रिस्त्वब्दीयैकादशशताब्दीसम्मित इति बहुचरित्रकारसम्मतो नेह विमृश्यते पक्षान्तरोत्थानबीजविरहात् । वृत्तिकारस्तु श्रीदण्डनाथनारायणः क इति किंदेशीय इति किंसमयजीवीति च विनिर्णेतुं न कश्चिदपि मार्गो दृश्यते विवृतः, येन गच्छतां किमपि किमपि वा स्फुरेत् । अभ्यूहमात्रशरणानां तु तदिदमेकं चर्चार्हं

शक्यमुपहर्तुं, यद्——दण्डनाथशब्दश्रवणान्मूलकारश्रीभोजदेवस्य सेनाधिपतिर्वा न्यायाधिपतिर्वा कश्चिदयं स्यात् सम्भवेद् यदुपजीविनो हि तदीयाशयविवरणं समग्रं सफलं च । यद्ययमभ्यूहो भविता बलीयानन्याभिरुपपत्तिभिः, भवत्ययं च मूलकारसमसमयजीवी क्रिस्त्वब्दीयैकादशशताब्द्या भुवमिमामभूषयत् धारानगरीं च लब्धजीवनः । भोजदेवीया च काचिदसावप्रसिद्धा कृतिरस्मद-धिकरणसम्पादिताधस्तान्निर्दिश्यते —

विद्वज्जनवल्लभम् । (ज्योतिषम्) १२ अध्यायाः ।

सुबहु निरूपणीयं चर्चनीयं च नवनवं भोजदेवीयं शब्दानुशासन-प्रस्थानं तदिदं सरस्वतीकण्ठाभरणं समग्रं प्रसाध्य क्रियमाणं भवेद् यथाव-दिति सद्यस्तदीयं कमपि शुभावसरं प्रतीक्षमाणो विरमामि । समर्पयामि च कमपीममुपहारमाभरणं समक्षं सताम् ॥

अनन्तशयनम्,
२०-८-११०.

**के. साम्बशिवशास्त्री.**

॥ श्रीः ॥

श्रीभोजदेवप्रणीतं

# सरस्वतीकण्ठाभरणं

## श्रीनारायणदण्डनाथविरचितया हृदयहारिण्याख्यया वृत्त्या सनाथम् ॥

---

लोकैककल्पवृक्षाय बालेन्दुकुसुमश्रिये ।
श्रेयःफलनिमित्तायं पार्वतीपतये नमः ॥ १ ॥

यः सालभञ्जिकाभङ्गिमङ्गे धारयति श्रियम् ।
तस्मै जगत्त्रयाधारस्तम्भाय स्वभुवे नमः ॥ २ ॥

विद्वज्जनमनोम्भोजप्रतिबोधविधायिनम् ।
विघ्नान्धतमसादित्यं नित्यं स्तौमि गणाधिपम् ॥ ३ ॥

पदलक्ष्मप्रबोधाय मया हृदयहारिणी ।
वृत्तिः सरस्वतीकण्ठाभरणस्य विधास्यते ॥ ४ ॥

प्रथमं तावदभिमतदेवतानमस्कारकरणद्वारेण विधेयं शास्त्रं प्रतिजानीते —

**प्रणम्यैकात्मतां यातौ प्रकृतिप्रत्ययाविव ।**
**श्रेयःपदमुमेशानौ पदलक्ष्म प्रचक्ष्महे ॥**

उमेशानौ गौरीमहेश्वरौ । प्रकृतिप्रत्ययाविव प्रकृतिप्रत्ययौ यथैकात्मतां यातौ एकस्वरूपतां प्राप्तौ श्रेयःपदं श्रेष्ठं पदं सम्पद्येते, तथा एकात्मतां यातौ एकशरीरतां प्रतिपन्नौ श्रेयःपदं श्रेयसां धर्माणां पदं स्थानम् आश्रयभूतौ । प्रणम्य नमस्कृत्य पदलक्ष्म प्रचक्ष्महे पदलक्षणं प्रतिपादयामह इति ।

G. P. T. 2808. 500. 22-10-1106. B

अत्र सूत्रकारः क्रियमाणस्य व्याकरणस्य प्रकृतिप्रत्ययादिव्युत्पादनपरत्वात् प्रस्तुतप्रकृतिप्रत्ययाभ्यामेव साम्यं श्लेषोपमयोपपाद्य प्रतिपाद्यमानार्थसिद्ध्यर्थमुमामहेश्वरयोर्नमस्कारमकार्षीत् । तौ हि नमस्कृतौ स्वानुरूपप्रकृतिप्रत्ययविधानसमये समीहितसिद्धिं साधयतामित्यर्थः ॥

प्रतिज्ञातार्थसिद्धये पूर्वसिद्धमेव सानुबन्धं वर्णसमुदायाम्नायमादावुपदिशति—

## अइउण् ॥ १ ॥

अ इ उ इति क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणमेकेन । 'ऋकोऽणो रलौ' इत्यकारेण । जातिनिर्देशोऽयम् । तेन 'अणोऽनुनासिक' इत्यादावुदात्तानुदात्तस्वरितानां ह्रस्वदीर्घप्लुतानां सानुनासिकनिरनुनासिकानां च ग्रहणम् । व्यक्तिपक्षे तु 'अविधीयमानोऽण् स सवर्ण' इत्यनेन भवति ॥

## ऋऌक् ॥ २ ॥

ऋ ऌ इति वर्णावुपदि(श्या ? श्य पूर्वांश्चा)न्ते ककारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं चतुर्भिः । 'अकः सवर्णे दीर्घ' इत्यकारेण, 'इको यणचि' इतीकारेण, 'उगित' इत्युकारेण, 'ऋकोऽणो रलौ' इत्यृकारेण । ननु ऌकारः क्लृपिस्थ एव प्रयुज्यते । कृपेश्च 'पूर्वत्रासिद्धम्' इति लत्वस्यासिद्धत्वाद् ऋकार एवाच्कार्याणि भविष्यन्तीति किमर्थमुपदिश्यते । लत्वविधानात् प्लुतस्वरितद्विर्वचनरूपाण्यच्कार्याणि ऌकारे यथा भवेयुरिति । क्लृ३प्तशिख ! । प्रक्लृप्तः । क्लृप्तः ॥

## एओङ् ॥ ३ ॥

ए ओ इति वर्णावुपदिश्यान्ते ङकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणमेकेन 'एङि पररूपम्' इत्येकारेण ॥

## ऐऔच् ॥ ४ ॥

ऐ औ इति वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं चतुर्भिः । 'इको यणचि' इत्यकारेण, 'इच एकाचोऽम्प्रत्ययवच्च' इतीकारेण, 'एचोऽयवायाव' इत्येकारेण, 'वृद्धिरादैच्,'

इत्यैकारेण । वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयः सन्ध्यक्षरेषु अकारेकारोकाराः ऋवर्णे रेफः ऌवर्णे लकार इति, तेषु वर्णकार्यं न भवति । वर्णच्छायानुकारिणो हि ते, न साक्षाद्वर्णाः । पृथक्प्रयत्ननिर्वर्त्यं ह्याचार्या वर्णमिच्छन्ति । तेन अग्ने इदं, वायो उदकम्, आनीय आलूय इत्यादिषु वर्णैकदेशानिकारोकारह्रस्वादीनाश्रित्य सवर्णदीर्घतुगादिकार्याणि न भवन्ति ॥

हयवरलण् ॥ ५ ॥

ह य व र ल इति वर्णानुद्दिश्य पूर्वांश्चान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । 'अविधीयमानोऽण् स सवर्ण' इत्यकारेण, 'इणः ष' इतीकारेण, 'इको यणाचि' इति यकारेण । इण्ग्रहणानि तु सर्वाण्यनेन णकारेण । अण्ग्रहणानि तु पूर्वेण । 'अविधीयमानोऽण् स सवर्णः', 'दीर्घादणि समानपादे' इति द्वयमनेन । जातिनिर्देशश्चायम् । तेन सय्य्यँन्ता सव्ँव्ँत्सर इत्यादावनुस्वारस्य परसवर्णे सति तस्य यग्रहणेन ग्रहणाद् द्विर्वचनम् । व्यक्तिपक्षे तु 'अविधीयमानोऽण् स सवर्णः' इत्यनेन भवति ॥

ञमङणनम् ॥ ६ ॥

ञ म ङ ण न इति वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं चतुर्भिः । 'चयः शश्छोऽमि' इत्यकारेण, 'शावयम' इति यकारेण, 'यरो ञमि ञम् वा' इति ञकारेण, 'ङमो ह्रस्वाद्वा' इति ङकारेण ॥

झभञ् ॥ ७ ॥

झ भ इति वर्णानुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवत्येकेन । 'अत आद् यञि' इति यकारेण ॥

घढधष् ॥ ८ ॥

घ ढ ध इति वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं भवति द्वाभ्याम् । 'झष एकाच' इति झकारेण, 'स्ध्वोर्बशो भष्' इति भकारेण ॥

जबगडदश् ॥ ९ ॥

ज ब ग ड द इति वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं पञ्चभिः । 'अवर्णभोभगोअघोपूर्वस्य लोपो हशि'

इति हकारेण, 'अवङ्गुणादेः कृत' इति वकारेण, 'झलो जश् झशि' इति जकारझकाराभ्याम् । 'झष एकाचः स्ध्वोर्बशो भष्' इति बकारेण ॥

खफछठथचटतव् ॥ १० ॥

ख फ छ ठ थ च ट त इति वर्णानुपदिश्य वकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणमेकेन । 'नश्छव्यप्रशान्' इति छकारेण । खफग्रहणमुत्तरार्थम् ॥

कपय् ॥ ११ ॥

क प इति वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं पञ्चभिः । 'अनुस्वारस्य ययि यम्' इति यकारेण, 'यणो मय' इति मकारेण, 'झय' इति झकारेण, 'शरः खय' इति खकारेण, 'चयः शश्छोऽमि' इति चकारेण ॥

शषसर् ॥ १२ ॥

श ष स इति वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं पञ्चभिः । 'यरो ञमि ञम् वा' इति यकारेण । 'हलो झरां झरि सवर्णेन' इति झकारेण, 'चर् खरि' इति चकारखकाराभ्याम् । 'शरि द्वितीय' इति शकारेण ॥

हल् ॥ १३ ॥

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम् । तस्योच्चारणं षड्भिः । 'शिदनेकाल् सर्वस्य' इत्यकारेण, 'हलोऽनादेः' इति हकारेण, 'व्योर्वलि लोप' इति वकारेण, 'रलो हलादेरिदुदुपधस्य सनि च' इति रेफेण, 'झलो झलि' इति झकारेण, 'शल इगुपधाददशोऽनिटः क्स' इति शकारेण । हलामपि जातिनिर्देशः । तेन अवात्तामिति वसेः सस्य तकारे कृते ततः पर(स्य) सिचस्तकारे 'झलो झलि' इति लोपः सिध्यति । पूर्वमुपदिष्टोऽपि हकारः रल् शल् वल् इति प्रत्याहारग्रहणेषु ग्रहणार्थं पुनरुपदिश्यते । तेन स्निहित्वा स्नेहित्वेति 'रलो हलादेरिदुदुपधस्य सनि च' इति गुणविकल्पः, अलिक्षदिति 'शल इगुपधाददशोऽनिटः क्स' इति क्सः, रुदिहीति 'रुदिस्वपिश्वस्यनिजक्षित्यस्तिङ' इति वलादिलक्षण इट् (च)

सिध्यति। 'हयवरलण्' इत्यत्र तु हकार इण्ग्रहणेषु हश्ग्रहणेषु च ग्रहणार्थमुपदिश्यते। तेन ग्रहीषीढ्वं ग्रहीषिध्वम् इत्यादौ 'इटो वा' इति इणन्ताद्धातोः परस्य सीध्वमो धकारस्य ढत्वविकल्पः, को हसतीत्यादौ 'हशि चातो रोः' इत्युकारश्च सिध्यति। विसर्जनीयजिह्वामूलीयोपध्मानीयनासिक्यानुस्वारयमास्तु पृथगुपदेशप्रयोजनाभावान्नोपदिश्यन्ते। हकारादिष्वकार उच्चारणार्थः॥

एकेन ङञणवाः स्युर्द्वाभ्यां षो णस्त्रिभिश्चतुर्भिः कचमाः।
स्युः पञ्चभिस्तु शयराः षड्भिर्लः स्यादिति द्विचत्वारिंशत्॥

## सिद्धिः क्रियादेर्लोकात्॥ १॥

क्रियागुणद्रव्यजातिकालादीनां लोकतो वैयाकरणसमयविदः सिद्धिरवगन्तव्या। ते च यथावसरमुदाहरिष्यन्ते॥

## भूवादिः क्रियावचनो धातुः॥ २॥

कारकाणां प्रवृत्तिविशेषः क्रिया। तद्वाचिनो भू इत्येवमादयो धातुसंज्ञा भवन्ति। भवति। एधते। भूवादिग्रहणं किम्। आणवयतीत्यादौ मा भूत्। क्रियावचन इति किम्। भूः। द्यौः। वकारो मङ्गलार्थः॥

## जुचुलुम्पादिश्च॥ ३॥

ज्वादयः सौत्राः चुलुम्पादयश्चासौत्रा भूवादिष्वपठिताः क्रियावाचिनो धातुसंज्ञा भवन्ति। जवनः। स्तभ्नाति। चुलुम्पाञ्चकार। प्रेङ्खोलयति॥

## सनाद्यन्तश्चा णिङः॥ ४॥

णिङ्पर्यन्ता ये सनादयस्तदन्ताः क्रियावाचिनो धातुसंज्ञा भवन्ति। तितिक्षते। पुत्रीयति। लोलूयते। कामयते। आणिङ इति किम्। चकासांचकार। प्रत्ययग्रहणपरिभाषयैव सनाद्यन्तस्य ग्रहणे सिद्धे अन्तग्रहणमन्यत्र 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापनार्थम्। तेन दृषत्तीर्ण इति क्तान्तस्य निष्ठासंज्ञायामसत्यां नकारो न भवति॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम्॥ ५॥

अर्थोऽभिधेयः । स च स्वार्थो द्रव्यं लिङ्गं सङ्ख्या शक्तिरिति । द्योत्यश्च समुच्चयादिः । तद्वच्छब्दरूपं प्रातिपदिकसंज्ञं भवति । धातुः प्रत्ययान्तश्च न भवति । वृक्षः, शुक्लः, डित्थः, स्वः, धवश्च खदिरश्चेति । अर्थवदिति किम् । वनम् । नान्तस्यावधेर्मा भूत् । अधातुरिति किम् । अहन् । प्रातिपदिकत्वे नलोपः स्यात् । अप्रत्यय इति किम् । काण्डे । ह्रस्वः स्यात् ॥

## कृत्तद्धितष्फङ्याप्त्यूङः ॥ ६ ॥

कृदादिप्रत्ययान्तमर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति । अप्रत्यय इति प्रतिषेधे प्राप्ते प्रतिप्रसवार्थं वचनम् । कृत्, कारकः । तद्धितः, औपगवः । ष्फः, गार्ग्यायणी । ङीति ङीप्ङीष्ङीनां ग्रहणम् । कुमारी, गौरी, शार्ङ्गरवी । आबिति टाप्डाप्चापां ग्रहणम् । अजा, बहुराजा, कारीषगन्ध्या । ति, युवतिः । ऊङ्, ब्रह्मबन्धूः ॥

## समासानुकरणनिपाताश्च ॥ ७ ॥

समासोऽनुकरणं निपातश्च प्रातिपदिकसंज्ञानि भवन्ति । समासः, राजपुरुषः । अनुकरणं, पचतिमाह । निपातः, प्रलम्बते । प्रातिपदिकत्वात् स्वाद्युत्पत्तौ 'तिङ्ङतिङ' इति सर्वानुदात्तत्वं भवति । अर्थवत्त्वात् प्रातिपदिकत्वे सिद्धे समासग्रहणेन नियमार्थेनार्थवत्समुदायस्य वाक्यस्य न भवति । अनुकरणग्रहणेन चाभेदविवक्षायां गवित्ययमाहेत्यादावर्थवतोऽप्यनुकार्यस्य न भवति । निपातस्य त्वनर्थकस्याप्राप्ता विधीयते ॥

## तदुभयं विकरणविभक्ती च प्रत्यये प्रकृतिः ॥ ८ ॥

तदिति धातुः प्रातिपदिकं चोभयमपि सम्भवे सति विकरणा विभक्तयश्च प्रत्यये परतः प्रकृतिसंज्ञानि भवन्ति । कर्त्ता । औपगवः । करिष्यावः । अप्सव्यं पचतितराम् । प्रत्यय इति किम् । श्र्यर्थम्, स्वर्थम् । प्रकृतित्वाभावादियुवौ न भवतः ॥

## ततो विधीयमानः सनादिरा कपः प्रत्ययः ॥ ९ ॥

तत उभयस्माद्विभक्तेश्च विधीयमानाः सनादयः कप्प्रत्ययपर्यन्ताः प्रत्ययसंज्ञा भवन्ति ॥

*सत्यादिरा शानचो विकरणः ॥ १० ॥

तव्यादयः प्राक् तिपः कृतः ॥ ११ ॥

तिपः प्राग् ये तव्यादयः प्रत्ययास्ते कृत्संज्ञा भवन्ति । भवतः शायिका । अपां स्रष्टा ॥

कृत्याः प्राङ् ण्वुलः ॥ १२ ॥

(ण्वुलः) प्राग् ये तव्यादयः प्रत्ययास्ते कृत्यसंज्ञा भवन्ति । भवता कटः कर्तव्यः, करणीयः, कृत्यः, कार्यः । संज्ञासमावेशात् प्रत्ययकार्यमाद्युदात्तत्वादिकं कृत्संज्ञाकार्यं च प्रातिपदिकत्वादिकं भवति ॥

शतृशानचौ सत् ॥ १३ ॥

कृत्सु प्रत्ययेषु शतृशानचौ सत्संज्ञौ भवतः । ब्राह्मणस्य पचन्, ब्राह्मणस्य पचमानः । ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाणः ॥

क्तक्तवतू निष्ठा ॥ १४ ॥

कृत्प्रत्ययौ क्तक्तवतू निष्ठासंज्ञौ भवतः । ग्रामं गतः । ग्रामं गतवान् ॥

प्राग्जितीयाणादयस्तद्धिताः ॥ १५ ॥

'प्राग्जितीयादण्' इत्यत आरभ्य ये प्रत्ययाः, (ते) तद्धितसंज्ञा भवन्ति । औपगवः । गार्ग्यायणः ॥

तरप्तमपौ घः ॥ १६ ॥

तद्धितेषु तरप्तमपौ घसंज्ञौ भवतः । कालितरा । कालितमा । घसंज्ञायां पूर्वस्य ङ्यो ह्रस्वः ॥

बहुगणवतुडतयश्च सङ्ख्या ॥ १७ ॥

बहुगणशब्दौ वतुडतिप्रत्ययान्ताः चकारादेकादयश्च सङ्ख्यासंज्ञा भवन्ति । बहुशः । बहुकः । बहुधा । गणधा । तावत्कृत्वः । एकशः । पञ्चधा । अन्वर्थसंज्ञाविज्ञानात् (सङ्ख्या)भेदवाचिनोर्बहुगणशब्दयोर्ग्रहणं, नतु वैपुल्यसङ्घवाचिनोः । बहुः सूपः, गवां गण इति । अत एव वतुडतिप्रत्ययाभ्यां संज्ञाविधावपि तदन्तविधिर्भवति ॥

---

* अस्य वृत्तिर्मातृकायां लुप्ता ।

अध्यर्धार्धपूर्वपूरणाः समासकन्विधौ ॥ १८ ॥

अध्यर्धशब्दोऽर्धपूर्वपदपूरणप्रत्यया(न्ता)श्च शब्दाः समासविधौ कन्विधौ च सङ्ख्यासंज्ञा भवन्ति । अध्यर्धेन शूर्पेण क्रीतम् अध्यर्धशूर्पम् । अर्धपञ्चमशूर्पम् । सङ्ख्यात्वात् तद्धितार्थे द्विगुसमासः । 'द्विगोरनपत्येऽजादेः' इति प्राग्दीव्यतीयस्य ठञो वा लुक् । कन्विधौ अध्यर्धेन क्रीतमध्यर्धकम् । अर्धपञ्चमकम् । समासकन्विधाविति वचनात् 'कृत्वसुजात् कृत्वसुच्' इत्यादौ न भवति ॥

तिङ्सुपो विभक्तिः ॥ १९ ॥

तिङस्तिबादयो महिङन्ताः, सुपः स्वादयः सुप्पर्यन्ताः प्रत्येकं विभक्तिसंज्ञा भवन्ति । पचतः । पचताम् । पचेरन् । वृक्षाः । वृक्षम् । वृक्षात् ॥

तिङां त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ २० ॥

तिङां त्रीणि त्रीणि वचनानि यावत्सम्भवमावृत्त्या प्रथममध्यमोत्तमसंज्ञानि भवन्ति । प्रथममध्यमोत्तमा इति कृतद्वन्द्वानां चैकशेषः । तानि च पूर्वाचार्यैः पुरुषसंज्ञया व्यवह्रियन्ते । तिप् तस् झि इति प्रथमः । सिप् थस् थ इति मध्यमः । मिप् वस् मस् इति उत्तमः । त आतां झ इति प्रथमः । थास् आथां ध्वम् इति मध्यमः । इड् वहि महिङ् इति उत्तमः ॥

सुपां प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तम्यः॥२१॥

सुपां त्रीणि त्रीणि वचनानि यथाक्रमं प्रथमादिसंज्ञानि भवन्ति । सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्यां भिस् इति तृतीया । ङे भ्यां भ्यस् इति चतुर्थी । ङसि भ्यां भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥

तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ २२ ॥

तानि सुपां तिङां च त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । तिबित्येकवचनम् । तसिति द्विवचनम् । झीति

बहुवचनम् । एवं सर्वेषु पुरुषेषु । सु इत्येकवचनम् । औ इति द्विवचनम् । जस् इति बहुवचनम् । एवं सर्वासु सुब्विभक्तिषु ॥

अनाम्लादेशाः परस्मैपदानि ॥ २३ ॥

लिडादेशमामं वर्जयित्वा लादेशास्तिबादयो मस्पर्यन्ताः शतृक्वसू च परस्मैपदसंज्ञा भवन्ति । पचति पचतः पचन्ति । पचसि पचथः पचथ । पचामि पचावः पचामः । पचन् । पेचिवान् । अनामिति किम् । लोलूयाञ्चक्रे । परस्मैपदत्वाभावादात्मनेपदिभ्योऽप्याम् भवति ॥

तङानास्त्वात्मनेपदानि ॥ २४ ॥

तङस्तादयो महिङन्ता लादेशाः शानच्कानचौ चात्मनेपदसंज्ञा भवन्ति । पच्यते पच्येते पच्यन्ते । पच्यसे पच्येथे पच्यध्वे । पच्ये पच्यावहे पच्यामहे । पच्यमानः । पेचानः । तुशब्दोऽवधारणार्थः । तेन परस्मैपदसंज्ञया समावेशो न भवति ॥

विभक्त्यन्तं पदम् ॥ २५ ॥

विभक्त्यन्तं शब्दरूपं पदसंज्ञं भवति । ग्रामो वः स्वं, ग्रामो नः स्वम् । ब्राह्मणाः पचन्ति । ब्राह्मणौ पचतः । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापितत्वाद् अन्तग्रहणम् ॥

कृद्विधौ सप्तमीस्थमुपपदम् ॥ २६ ॥

कृद्विधानसूत्रे सप्तमीनिर्दिष्टं पदमुपपदसंज्ञं भवति । 'कर्मण्यण्' । कुम्भकारः । 'अधिकरणे शेतेः' । खशयः । स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम् ॥

समासे प्रथमानिर्दिष्टमुपसर्जनम् ॥ २७ ॥

समासार्थत्वात् समासशास्त्रं समासः । समासविधिशास्त्रे प्रथमानिर्दिष्टं पदमुपसर्जनसंज्ञं भवति । 'द्वितीया श्रित—' इत्यादिसूत्रेषु द्वितीयादिपदानि प्रथमानिर्दिष्टानि । कष्टश्रितः । शङ्कुलाखण्डः । यूपदारु । वृकभयमित्यादि । उपसर्जनत्वात् पूर्वनिपातः ॥

अषष्ठ्येकविभक्ति चापूर्वनिपाते ॥ २८ ॥

समासार्थे वाक्ये द्वितीये सम्बन्धिनि नानाविभक्तिभिर्युज्यमानेऽपि यदेकयैव विभक्त्या युज्यते, तत् पदं षष्ठ्यन्तवर्जितं पूर्वनिपातादन्यत्रोपसर्जनसंज्ञं भवति । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । दशगुः । अत्र क्रीतं क्रीतेनेत्यादिनानाविभक्तियोगेऽपि गोभिरित्येकयैव तृतीयया युज्यते तत् पदम् । षष्ठ्यन्तं वर्जित्वा 'गोरुपसर्जनस्यान्त्यस्य' इति ह्रस्वः । अषष्ठीति किम् । अर्धं पिप्पल्या अर्धपिप्पली ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ २९ ॥

समानाधिकरणपदस्तत्पुरुषो यः, स कर्मधारयसंज्ञो भवति । पाचिका चासौ वृन्दारिका चेति पाचकवृन्दारिका । परमराज्यम् । समानाधिकरण इति किम् । दर्शनीयाया माता दर्शनीयामाता । ब्राह्मणराज्यम् । पुंवद्भावः, 'कर्मधारये राज्यम्' इति स्वरप्रतिषेधश्च न भवति ॥

तद्धितार्थादौ सङ्ख्यापूर्वो द्विगुः ॥ ३० ॥

'तद्धितार्थोत्तरपदसमाहारे च' इति यः सङ्ख्यापूर्वस्तत्पुरुषः, स द्विगुसंज्ञो भवति । तद्धितार्थे—पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । द्विगुत्वात् तद्धितस्य लुक् । उत्तरपदे—पञ्च नावः प्रिया यस्य पञ्चनावप्रियः । 'नावो द्विगोः' इति समासान्तः । समाहारे— पञ्चानां पूलानां समाहारः पञ्चपूली । 'द्विगोः' इति ङीप् । एकापूपीत्यादौ चैकस्यानेकत्वारोपेण समाहार उपपद्यत इति द्विगुसंज्ञायां ङीप् भवति । तद्धितार्थादाविति किम् । सप्तर्षयः । 'इगन्ते द्विगौ' इत्येष स्वरो न भवति ॥

आख्यातं साव्ययकारकविशेषणं वाक्यम् ॥ ३१ ॥

आख्यातमित्यनेन तिङ्कृत्यक्तक्तखलर्थाद्यन्तं साध्यप्रधानार्थाभिधायि लक्ष्यते । तत् प्रयुज्यमानमप्रयुज्यमानं वा साव्ययं सकारकं सकारकविशेषणं सक्रियाविशेषणं च वाक्यसंज्ञं भवति । उच्चैः पठति । ओदनं पचति । स्वादुमोदनं पचति । सुष्ठु पचति । ग्रामस्ते गन्तव्यः । सर्पिस्ते दत्तम् । कटो वां सुकरो देवदत्तेन । स वो हितमुक्तवान् । स कृतपूर्वी वः कटम् । अप्रयुज्यमानमपि— ग्रामस्ते स्वम् । आख्यातमित्येकवचननिर्देशाद् अयं

दण्डो हरानेन फलानि, ओदनं पच तव भविष्यति, मम भविष्यतीत्यादौ गम्यमाने श्रूयमाणे चाख्यातान्तरे भिन्नवाक्यत्वाद् निघातयुष्मदस्मदादेशा न भवन्ति। ब्रूहि ब्रूहि देवदत्तेत्यादौ कृते द्विर्वचने अर्थाभेदादेकमेवाख्यातमिति वाक्यसंज्ञा भवति॥

क्रियानिमित्तं कारकम्॥ ३२॥

क्रियानिष्पत्तिकारणं कर्त्रादि कारकसंज्ञं भवति। तत्र—

"स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः॥"

इति॥

स्वतन्त्रः कर्ता॥ ३३॥

क्रियासिद्धौ प्राधान्येन विवक्षितः कारकविशेषः कर्तृसंज्ञो भवति। देवदत्तः पचति। स्थाली पचति॥

तस्य प्रयोजकोऽनुकूलो वा हेतुश्च॥ ३४॥

तं कर्तारं प्रेषणादिना यः प्रयुङ्क्ते तदनुकूलानि वाचरति, स हेतुसंज्ञकः कर्तृसंज्ञकश्च भवति। पचन्तं देवदत्तं प्रयुङ्क्ते, देवदत्तेन पाचयति। द्विजं भुञ्जानं प्रयुङ्क्ते, द्विजं भोजयति। भिक्षा वासयति। हेतुत्वाण्णिचो निमित्तम्। कर्तृत्वाच्च कर्तृप्रत्ययेनाभिधीयते। इह चकारकरणादुत्तरत्र कारकविशेषसंज्ञाविधौ संज्ञासमावेशो न भवति। अस्य च प्रेषणादयोऽवान्तरव्यापाराः। यदाह—

"प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि वाचरन्।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते॥"

इति॥

समानधातौ कर्मणा तुल्याकर्मकक्रियः कर्मकर्ता॥ ३५॥

कर्मणा कर्मस्थया क्रियया समानधातौ पूर्वदृष्टया तुल्या सम्प्रत्यकर्मिका क्रिया यस्य स कर्तृविशेषः कर्मकर्तृसंज्ञो भवति। अकारि कटः स्वयमेव। पच्यते ओदनः स्वयमेव। भिद्यते कुसूलः स्वयमेव। अत्र करोति

कटं, पचत्योदनं, भिनत्ति कुसूलमित्यादौ यथाभूता कटादिकर्मणां निर्वृत्तिविक्लित्तिद्वैधाभवनादिका क्रिया तथाभूतैवाविवक्षिते कर्तृव्यापारे। स्वातन्त्र्यविवक्षायां तु तस्मिन्नेव धातावकर्मिका च। एवं चाकर्मकत्वाद् भावे लकारः पच्यते ओदनः स्वयमेवेति। समानधाताविति किम्। पचत्योदनं देवदत्तः सिध्यत्योदनः। कर्मणेति किम्। साध्वसिश्छिनत्ति, साधु स्थाली पचति। तुल्यक्रिय इति किम्। स्रवत्युदकं कुण्डिका। विसृजतीति गम्यते। स्रवत्युदकं कुण्डिकायाः। निष्क्रामतीति गम्यते। अकर्मकक्रिय इति किम्। भिनत्त्यात्मानं कुसूलः। भिद्यमानः कुसूलः पात्राणि भिनत्ति। अन्योन्यमाश्लिष्यतः। कर्मस्थया कर्तुरुपमानात् कर्तृस्थक्रियाकर्मणः स्वातन्त्र्येऽपि कर्मकर्तृसंज्ञा न भवति। तेन गम्यते ग्रामः स्वयमेवेत्यादि न भवति॥

दुहिपच्योः सकर्मकक्रियश्च ॥ ३६ ॥

दुहेः पचेश्च कर्मस्थया क्रियया समानधातौ पूर्वदृष्टया तुल्यसकर्मकक्रियस्तुल्याकर्मकक्रियश्च कर्ता कर्मकर्तृसंज्ञो भवति। दुग्धे गौः पयः स्वयमेव। दुग्धे गौः स्वयमेव। उदुम्बरः फलं पच्यते स्वयमेव। पच्यते ओदनः स्वयमेव॥

क्वचित् करणेन ॥ ३७ ॥

करणस्थया क्रियया समानधातौ पूर्वदृष्टया तुल्यसकर्मकक्रियः कर्ता कर्मकर्तृसंज्ञो भवति। परिवारयन्ति कण्टकैः पुरुषा वृक्षम्। परिवार्यन्ते वृक्षं कण्टकाः स्वयमेव। क्वचिदिति किम्। साध्वसिश्छिनत्ति॥

कर्तुरीप्सिततमं कर्म ॥ ३८ ॥

कर्ता क्रियया यदतिशयेनाप्तुमिच्छति, तत् कारकं कर्मसंज्ञं भवति। तत् त्रिविधम्। निर्वर्त्यं विकार्यं प्राप्यं च। तदुक्तं—

"यदसज्जायते सद्वा जन्मना यत् प्रकाशते।
तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥
क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते॥"

तत्र निर्वर्त्यं — कटं करोति, पुत्रं प्रसूते। विकार्यं — काष्ठं दहति, काण्डं लुनाति। प्राप्यम् — आदित्यं पश्यति, ग्रामं गच्छति। अस्य तु त्रिविधस्यापि यथाक्रममवान्तरव्यापारा निर्वर्तते, विकुरुते, आभासते, उपगच्छतीत्यादयः। तदुक्तं —

"निर्वर्त्यादिषु तत् पूर्वमनुभूय स्वतन्त्रताम्।
कर्त्रन्तराणां व्यापारे कर्म सम्पद्यते ततः॥"

कर्तुरिति किम्। माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषाः न कर्तुः। तमग्रहणं किम्। पयसा ओदनं भुङ्क्ते॥

तथायुक्तं चानीप्सितम्॥ ३९॥

यथा कर्तुरीप्सिततमं कर्म क्रियया युज्यते, तथा युज्यमानमनीप्सितमपि कारकं कर्मसंज्ञं भवति। ईप्सितादन्यदनीप्सितं द्वेष्यमुदासीनं प्राप्यं च। विषं भक्षयति। चोरान् पश्यति। ग्रामं गच्छन् वृक्षमूलान्युपसर्पति॥

अकथितं च॥ ४०॥

अपादानादिविशेषवचनैरयुक्तं च कारकं कर्मसंज्ञं भवति। यदाह —

"दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना॥

जिदण्डिकृषिकृञ्मन्थिनीहृञ्मुषिवहिग्रहाम्।
द्विकर्मसु पचादीनां चोपसङ्ख्यानमिष्यते॥"

गां दोग्धि पयः। पौरवं गां याचते। गामवरुणाद्धि व्रजम्। माणवकं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षमवचिनोति फलानि। शिष्यं धर्मं ब्रूते। शिष्यं धर्ममनुशास्ति। गर्गान् शतं जयति। गर्गान् शतं दण्डयति। ग्रामं शाखां कर्षति। काशान् कटं करोति। अमृतमम्बुधिं मथ्नाति। अजां नयति ग्रामम्। ग्रामं भारं हरति। उपसरमश्वं मुष्णाति। ग्रामं भारं वहति। शतानीकं शतं गृह्णाति। तण्डुलानोदनं पचति।

"अप्रधाने दुहादीनां प्रधाने वहिनीहृञाम्।
कर्मणि प्रत्ययोऽन्येषां नियमो नैव विद्यते॥"

दुह्यते गौः पय इत्यादि । उह्यते भारो ग्रामम् । अजा नीयते ग्रामम् । ह्रियते भारो ग्रामम् । गर्गं शतं जीयते, गर्गः शतं जीयते इत्यादि । क्रियानिमित्तमित्येव । माणवकस्य पितरं पन्थानं पृच्छति ॥

क्रियाविशेषणकालभावगन्तव्याध्वदेशाश्च ॥ ४१ ॥

क्रियाविशेषणं मृद्वादि । कालो मासादिः । भावो गोदोहनादिः । अध्वा क्रोशयोजनादिः । देशः कुरुपञ्चालादिः । गन्तव्यग्रहणमध्वदेशयोर्विशेषणम् । क्रियाविशेषणादयः कर्मसंज्ञा भवन्ति । मृदु पचति । मासमास्ते । गोदोहं स्वपिति । क्रोशं स्वपिति । क्रोशं शेते । कुरून् स्वपिति । गन्तव्यग्रहणं किम् । योजने भुङ्क्ते । पञ्चालेषु वसति ॥

गतिज्ञानप्रत्यवसानार्थशब्दक्रियाकर्मकश्रुदृशीनामणिकर्ता णौ ॥ ४२ ॥

गत्यर्थज्ञानार्थभोजनार्थानां शब्दक्रियाणामकर्मकाणां श्रुदृशोरप्यणौ यः कर्ता णौ स कर्मसंज्ञो भवति । गच्छति माणवको ग्रामं, गमयति माणवकं ग्रामम् । एवं ज्ञापयति माणवकं धर्मम् । भोजयति माणवकमोदनम् । अध्यापयति माणवकं वेदम् । आसयति देवदत्तम् । श्रावयति माणवकं धर्मम् । दर्शयति रूपतर्कं कार्षापणम् । गत्यर्थानामिति किम् । पचत्योदनं देवदत्तः । पाचयत्योदनं देवदत्तेन । अणाविति किम् । गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते । गमयति देवदत्तेन यज्ञदत्तम् । प्रयोजकव्यापारेण व्याप्यमानस्य गत्यर्थादिसम्बन्धिन एव प्रयोज्यकर्तुः कर्मसंज्ञा, नान्यधातुसम्बन्धिनः । तेनास्य कर्तृत्वमेव । यदाह —

"गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः ।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥"

हृक्रोर्वा ॥ ४३ ॥

हृक्रोरणौ यः कर्ता स णौ कर्मसंज्ञो वा भवति । हारयति भारं देवदत्तं, देवदत्तेनेति वा । कारयति कटं देवदत्तं, देवदत्तेनेति वा ॥

दृश्यभिवाद्योरात्मनेपदे ॥ ४४ ॥

दृश्यभिवाद्योरणौ यः कर्त्ता स आत्मनेपदे परे णौ वा कर्मसंज्ञो भवति । पश्यन्ति भृत्या राजानं, तान् राजैवानुकूलाचरणेन प्रयुङ्क्ते । दर्शयते राजा भृत्यान् भृत्यैरिति वा । अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तं देवदत्तेनेति वा । 'णेरणौ यत् कर्म णौ चेत् स कर्ताऽनाध्याने' इत्यात्मनेपदम् । आत्मनेपद इति किम् । पश्यति रूपतर्कः कार्षापणं, दर्शयति रूपतर्कं कार्षापणम् । अभिवदति गुरुं माणवकः, तमपरः प्रयुङ्क्ते । अभिवादयति गुरुं माणवकेन । गत्यर्थादिना दृशेर्नित्यं कर्मत्वे प्राप्ते अभिवादेस्तु नित्यमप्राप्ते विकल्पः ॥

न नीखाद्यादिह्वायशब्दायक्रन्दाम् ॥ ४५ ॥

नयतेर्गत्यर्थस्यादिखाद्योरभ्यवहारार्थयोर्ह्वायशब्दायक्रन्दां शब्दक्रियाणां ण्यन्तानामपि कर्तुः कर्मसंज्ञा गतिज्ञानादिसूत्रेण प्राप्ता न भवति । नयति भारं देवदत्तः, नाययति भारं देवदत्तेन । खादयत्यपूपं देवदत्तेन। आदयत्योदनं विष्णुमित्रेण । ह्वाययति देवदत्तं यज्ञदत्तेन । शब्दाययति यज्ञदत्तं विष्णुमित्रेण । क्रन्दयति विष्णुमित्रं माणवकेन । कर्मसंज्ञाप्रतिषेधात् स्वव्यापाराश्रयं कर्तृत्वं भवति ॥

वहेरनियन्तृकर्तृकस्य ॥ ४६ ॥

असारथिकर्तृकस्य वहेरणौ कर्ता णौ कर्मसंज्ञो न भवति । वाहयति भारं देवदत्तेन । अनियन्तृकर्तृकस्येति किम् । वाहयति शकटं बलीवर्दान् सारथिः । वहेर्गत्यर्थत्वात् प्राप्ते प्रतिषेधः ॥

भक्षेरहिंसार्थस्य ॥ ४७ ॥

भक्षेः स्वार्थिकण्यन्तस्याहिंसाविषयस्याणौ कर्ता णौ कर्मसंज्ञो न भवति । भक्षयति पिण्डीं देवदत्तेन । अहिंसार्थस्येति किम् । भक्षयति सस्यं बलीवर्दान् । 'सर्वे भावाः सचेतना' इति सस्योपघातोऽत्र हिंसा । अभ्यवहारार्थत्वात् प्राप्ते प्रतिषेधः ॥

अधिशीङ्स्थासामाधारः ॥ ४८ ॥

'आधारोऽधिकरणम्' इत्यस्यापवादः । शीङादीनामधिपूर्वाणामाधारः कर्मसंज्ञो भवति । ग्राममधिशेते । पर्वतमधितिष्ठति । वृक्षमध्यास्ते । अधिग्रहणं किम् । शयने शेते । आधार इति किम् । पौरुषेणाधितिष्ठति ॥

उपान्वध्याङ्वसः ॥ ४९ ॥

उपादिपूर्वस्य वसेराधारः कर्मसंज्ञो भवति । पर्वतमुपवसति । (ग्राममनुवसति) । नगरमधिवसति । आवसथमावसति । अकर्मकप्रस्तावाद् वस्तेर्न भवति ॥

उपवसेरभोजनार्थस्य कालः ॥ ५० ॥

उपपूर्वस्य वसेरभोजनार्थस्याधारः काल एव कर्मसंज्ञो भवति । त्रिरात्रमुपवसति । मासमुपवसति । भोजननिवृत्तिं करोतीत्यर्थः । काल इति किम् । तीर्थे उपवसति । पूर्वेण सिद्धे नियमार्थं वचनम् ॥

अभिनिविशो वा ॥ ५१ ॥

अभिनिपूर्वस्य विशेराधारः कर्मसंज्ञो वा भवति । ग्राममभिनिविशते । कल्याणेऽभिनिवेशः । संज्ञा संज्ञिन्यभिनिविशते । व्यवस्थितविभाषेयम् । तेन प्रतिविषयं संज्ञाद्वयं न भवति ॥

दिवः करणम् ॥ ५२ ॥

दीव्यतेः करणसंज्ञाविषयः कारकं कर्मसंज्ञं वा भवति । अक्षान् दीव्यति, अक्षैर्दीव्यति । करणमिति किम् । अक्षैर्दीव्यति फलके ॥

क्रुधद्रुहोरुपसृष्टयोः सम्प्रदानम् ॥ ५३ ॥

क्रुधद्रुहोः सोपसर्गयोः सम्प्रदानसंज्ञाविषयः कारकं कर्मसंज्ञं भवति । देवदत्तमभिक्रुध्यति । देवदत्तमभिद्रुह्यति । उपसृष्टयोरिति किम् । देवदत्ताय क्रुध्यति । यज्ञदत्ताय द्रुह्यति । सम्प्रदानमिति किम् । देवदत्तमभिक्रुध्यति ग्रामे ॥

यजेश्च कर्मणः करणत्वे ॥ ५४ ॥

यजतेः कर्मणः करणत्वविवक्षायां यत् सम्प्रदानं, तत् कर्मसंज्ञं भवति । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ॥

साधकतमं करणम् ॥ ५५ ॥

क्रियासिद्धौ यत् प्रकृष्टोपकारकत्वेनाव्यवधानेन विवक्षितं, तत् कारकं करणसंज्ञं भवति । काष्ठैः स्थाल्यामोदनं पचति । दात्रेण लुनाति ॥

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥
स्वातन्त्र्ये विनियोक्तार आरादेवोपकुर्वते ।
करणेन हि सर्वेषां व्यापारो व्यवधीयते ॥ "

तमग्रहणमपादानादिसंज्ञाविधौ तरतमयोगो नास्तीति ज्ञापनार्थम् । कुसूलात् पचति, गङ्गायां घोषः, इभ्याः प्रतिवसन्तीति व्यवहितोपचरितयोरप्यपादानत्वमधिकरणत्वं च भवति । अस्य च कारकान्तरापेक्षया प्रकर्षो न स्वकक्ष्यायाम् । तेनैकस्यां क्रियायामनेकमपि करणं भवति । सूपेन सर्पिषा लवणेन पाणिना ओदनं भुङ्क्ते ॥

कर्मणा क्रियया वा यमभिप्रैति स सम्प्रदानम् ॥ ५६ ॥

कर्मणा करणभूतेन क्रियया वा यमभिप्रैति श्रद्धानुग्रहादिकाम्ययाभिसम्बध्नाति, तत् कारकं सम्प्रदानसंज्ञं भवति । उपाध्यायाय गां ददाति । देवेभ्यो बलिमुत्सृजति । माणवकाय धर्ममुपदिशति । स्वामिने स्वरूपं निवेदयति । अस्यानि(रा)करणादयोऽवान्तरव्यापाराः । यदाह —

"अनिराकरणात् *त्यक्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥"

क्रियया — पत्ये शेते । युद्धाय सन्नह्यते । देवेभ्यो नम इति । अभिप्रग्रहणं किम् । प्रतः पृष्ठं ददाति । रजकस्य वस्त्रं ददाति । सर्वोऽपि प्रेक्षापूर्वकारी बुद्ध्या कञ्चिदर्थं पश्यति । ततः प्रार्थयते । ततोऽध्यवस्यति । अथ प्रारभते । पश्चान्निर्वर्तयति । ततः फलं प्राप्नोतीति सन्दर्शनाद्यपेक्षया शयनादीनां साध्यत्वेन कर्मत्वे सति कर्मग्रहणेनैव सिद्धे क्रियाग्रहणं यदा

* 'कर्तुस्त्या' इति मुद्रितवाक्यपदीयपाठः.

सन्दर्शनादयो भेदेन विवक्ष्यन्ते, तदा शयनादिभिरभिप्रेयमाणस्य पत्यादेः सम्प्रदानत्वम्, यदा पुनरभेदेन विवक्ष्यन्ते, तदा नेतीत्येतमेवार्थं प्रथयति। विवक्षा च नियता। तथाहि — पत्ये शेते इत्यादौ भेदविवक्षा। कटं करोतीत्यादावभेदविवक्षा। ग्रामं गच्छति ग्रामाय गच्छतीत्यादौ भेदाभेदविवक्षेति प्रयोगसङ्करो न भवति। तदुक्तं —

"भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता।
तस्माद् गत्यर्थकर्मादौ व्यभिचारो न विद्यते॥"

रुच्यर्थानां प्रीयमाणः॥ ५७॥

अन्यकर्तृकोऽभिलाषो रुचिः। तदर्थानां प्रयोगे यत्स्थोऽभिलाषः, स प्रीयमाणोऽर्थः सम्प्रदानसंज्ञो भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदते दधि। देवदत्तादिस्थस्याभिलाषस्य मोदकादिः कर्ता। अनन्यकर्तृके त्वभिलाषे न भवति। देवदत्तो मोदकमभिलषति। रुच्यर्थानामिति किम्। मोदको देवदत्तं प्रीणाति। प्रीयमाण इति किम्। देवदत्ताय रोचते मोदकः पथि। कथं रोचते मम घृतमित्यादौ, कारकाणामविवक्षा। शेषत्वात् षष्ठी॥

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः॥ ५८॥

श्लाघादीनां प्रयोगे ज्ञापयितुमिष्यमाणं कारकं सम्प्रदानसंज्ञं भवति। देवदत्ताय श्लाघते। देवदत्तायापह्नुते। देवदत्ताय तिष्ठते। देवदत्ताय शपते। श्लाघापह्नवस्थानशपथान् कुर्वाणो देवदत्तं ज्ञपयितुमिच्छतीत्यर्थः। ज्ञीप्स्यमान इति किम्। देवदत्तं श्लाघते॥

धारेरुत्तमर्णः॥ ५९॥

धारयतेः प्रयोगे उत्तमर्णो धनस्य प्रयोक्ता यस्तत् कारकं सम्प्रदानसंज्ञं भवति। देवदत्ताय शतं धारयति। उत्तमर्ण इति किम्। देवदत्ताय शतं धारयति ग्रामे॥

स्पृहेरीप्सितो वा॥ ६०॥

स्पृहेः प्रयोगे यदीप्सितं तत् कारकं सम्प्रदानसंज्ञं वा भवति। पुष्पेभ्यः स्पृहयति। ईप्सित इति किम्। पुष्पेभ्यः स्पृहयति वने। ईप्सि-

तस्य सम्प्रदानसंज्ञापक्षे धातोरकर्मकत्वाद् भावे लकारः कर्तरि च निष्ठा भवति । पुष्पेभ्यः स्पृह्यते देवदत्तेन । पुष्पेभ्यः स्पृहितो देवदत्त इति ॥

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ६१ ॥

क्रोधो रोषः । द्रोहोऽपकारः । समानेषु दानमानाद्यमर्षणमीर्ष्या । परगुणानामसहनमसूया । क्रोधाद्यर्थानां धातूनां प्रयोगे यं प्रति कोपस्तत् कारकं सम्प्रदानसंज्ञं भवति । क्रोधः कोप एव । द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते । ततः सामान्येन विशेषणं यं प्रति कोप इति । देवदत्ताय क्रुध्यति कुप्यति वा । देवदत्ताय द्रुह्यति अपराध्यति वा । देवदत्तायेर्ष्यति । देवदत्तायासूयति । यं प्रति कोप इति किम् । भार्यामीर्ष्यति, मैनामन्यो द्राक्षीदिति । 'योऽस्मान् द्वेष्टी'त्यादौ द्विषेरप्रीत्यर्थत्वान्न भवति । सम्प्रदानसंज्ञायां कर्मसंज्ञाया बाधितत्वाद् भावे लादयः कर्त्रादौ च निष्ठा भवन्ति । देवदत्तायेर्ष्यते । देवदत्तायेर्ष्यितव्यम् । देवदत्तायेर्ष्यितो यज्ञदत्त इति ॥

राधीक्ष्योर्यस्य विप्रश्नः ॥ ६२ ॥

राधेरीक्षेश्च प्रयोगे यत्सम्बन्धी विविधः प्रश्नः, तत् कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय राध्यति । देवदत्तायेक्षते । नैमित्तिकः पृष्टः देवदत्तस्य शुभाशुभं पर्यालोचयतीत्यर्थः ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ६३ ॥

प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे वर्तते । स च परेण प्रयुक्तस्य भवति । प्रत्याङ्पूर्वस्य श्रुवः प्रयोगे पूर्वस्य प्रार्थनादेः कर्ता सम्प्रदानसंज्ञो भवति । देवदत्ताय गां प्रतिशृणोति । देवदत्ताय गामाशृणोति । अभ्युपगच्छतीत्यर्थः । पूर्वस्य कर्तेति किम् । गवि मा भूत् ॥

अनुप्रतिगृणश्च ॥ ६४ ॥

अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः शंसितुः प्रोत्साहने वर्तमानस्य प्रयोगे पूर्वस्य शंसनस्य कर्ता सम्प्रदानसंज्ञो भवति । होत्रेऽनुगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ॥

ध्रुवमपायेऽपादानम् ॥ ६५ ॥

सावधिकगमनमपायः । तत्र यद् ध्रुवमवधिभूतमपायेनानाविष्टं, तत् कारकमपादानसंज्ञं भवति । ग्रामादागच्छति । अपायेनानाविष्टं ध्रुवम् । तेन चलमप्यपादानम् । धावतोऽश्वात् पतितः । मेषान्मेषोऽपसर्पति । तदाह—

"(धं ? स)रणे देवदत्तस्य ध्रौव्यं पातात्तु* वाजिनः ।
आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥"

तच्च —

"निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधापादानमिष्यते ॥"

यत्र धातुना अपायलक्षणो विषयो निर्दिष्टस्तन्निर्दिष्टविषयम् । यथा— पर्वतादवरोहति । यत्र तु धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह, तदुपात्तविषयम् । यथा— कुसूलात् पचतीति । अत्रादानाङ्गे पाके पचिर्वर्तते । यत्र क्रियावाचिपदं न श्रूयते, केवलं क्रिया प्रतीयते, तदपेक्षितक्रियम् । यथा — साङ्काश्यकेभ्यः पाटलीपुत्रका अभिरूपतरा इति । अपायश्च कायसंसर्गपूर्वको बुद्धिसंसर्गपूर्वको वा विभाग उच्यते । तेनोत्तरमपादानसंज्ञाविधानं 'पञ्चमी विभक्ताद्' इति पञ्चमीविधानं च प्रपञ्चार्थं भवति ॥

जुगुप्साविरामप्रमादार्थानाम् ॥ ६६ ॥

जुगुप्साद्यर्थानां धातूनां प्रयोगे यदवधिभूतं, तदपादानसंज्ञं भवति । अधर्माज्जुगुप्सते । अधर्माद् विरमति । अधर्मात् प्रमाद्यति । दुःखहेतुरयमधर्म इति बुद्ध्या प्राप्य ततो निवर्तत इत्यर्थः । निवृत्त्यङ्गेषु जुगुप्साविरामप्रमादेष्वेते धातवो वर्तन्ते ॥

भीत्रार्थानां भयहेतुः ॥ ६७ ॥

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुः कारकमपादानसंज्ञं भवति । चोरेभ्यो बिभेति । चोरेभ्य उद्विजते । चोरान् बुद्ध्या

* 'पाते तु' इति वाक्यपदीयपाठः.

प्राप्य तेभ्यो निवर्तत इत्यर्थः । चोरेभ्यस्त्रायते । चोरेभ्यो रक्षति । बुद्धया चोरैः संयोज्य निवर्तयतीत्यर्थः ॥

परार्जेरसोढः ॥ ६८ ॥

परापूर्वस्य जयतेः प्रयोगे सोढुमशक्यं कारकमपादानसंज्ञं भवति । अध्ययनात् पराजयते । भोजनात् पराजयते । अध्ययनं भोजनं वा असहमानस्ततो निवर्तत इत्यर्थः । असोढ इति किम् । शत्रून् पराजयते ॥

वारणार्थानामीप्सितः ॥ ६९ ॥

वारणार्थानां धातूनां प्रयोगे प्रवृत्त्या यदाप्तुमिष्टं कारकं तदपादानं भवति । यवेभ्यो गां निषेधति । कूपादन्धं निवारयति । यवादिसम्पर्कं बुद्धया समीक्ष्य गवादीन् यवादिभ्यो निवर्तयतीत्यर्थः ॥

अन्तर्धौ येनादर्शनमिच्छति ॥ ७० ॥

अन्तर्धिक्रियायां येन क्रियमाणं दर्शनमात्मनो नेच्छति, तत् कारकमपादानसंज्ञं भवति । उपाध्यायादन्तर्धत्ते । उपाध्यायान्निलीयते । मामुपाध्यायो मा द्राक्षीदिति तिरोभवति । अन्तर्धाविति किम् । चोरान् न दिदृक्षते । इच्छतिग्रहणाददर्शनेच्छायां सत्यपि दर्शने भवति ॥

आख्यातोपयोगे ॥ ७१ ॥

उपयोगे नियमपूर्वके विद्याग्रहणे साध्ये आख्याता प्रतिपादयिता यस्तदपादानं भवति । उपाध्यायादधीते । उपाध्यायादागमयति । उपयोग इति किम् । नटस्य गाथां शृणोति । अपाय इत्येव सिद्धेऽनुपयोगनिवृत्त्यर्थं वचनम् ॥

जनिकर्तुः प्रकृतिः ॥ ७२ ॥

जनेः कर्ता जायमानः, तस्य प्रकृतिः कारणमपादानं भवति । शृङ्गाच्छरो जायते । बीजादङ्कुरो जायते । शरादयः शृङ्गादिभ्यो निष्क्रामन्तीत्यर्थः ॥

भुवः प्रभवः ॥ ७३ ॥

भवनं भूः । प्रभवत्यस्मादिति प्रभवः । भुवः कर्तुः प्रभवो यस्तदपादानं भवति । हिमवतो गङ्गा प्रवहति । अपक्रामतीत्यर्थः ॥

कर्तृकर्मान्तरितक्रियाधारोऽधिकरणम् ॥ ७४ ॥

कर्तृकर्मव्यवहिताक्रियाधारो यस्तदधिकरणसंज्ञं भवति । तदुक्तं —

"कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ (यज्ञे? शास्त्रे)ऽधिकरणं स्मृतम् ॥"

तच्च षोढा—वैषयिकमौपश्लेषिकमभिव्यापकं सामीपिकं नैमित्तिकमौपचारिकं चेति । तत्रानन्यत्रभावो विषयः, तस्मै प्रभवति वैषयिकम् । दिवि देवाः । एकदेशमात्रसंयोग उपश्लेषः, तत्र भवमौपश्लेषिकम् । कटे आस्ते । यस्याधेयेन समस्तावयवसंयोगः, तदभिव्यापकम् । तिलेषु तैलम् । यदाधेयसन्निधिमात्रेण क्रियानिमित्तं, तत् सामीपिकम् । गङ्गायां घोषः । निमित्तमेव नैमित्तिकम् । युद्धे सन्नह्यति । उपचारे भवमौपचारिकम् । करशाखाशिखरे करेणुशतमास्ते ॥

सम्बोधनप्रथमान्तमामन्त्रितम् ॥ ७५ ॥

सम्बोधनप्रथमान्तं पदमामन्त्रितसंज्ञं भवति ।

"सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थोऽर्थात् क्रियायां विनियुज्यते ॥"

देवदत्त ! तव स्वम् । हे ब्राह्मणौ ! । हे ब्राह्मणाः ! । यत्र तु निमित्तं सम्बन्ध एव साध्यो भवति, न तत्र सम्बोधनम् ।

"सम्बोधनं न लोकेऽस्ति विधातव्येन वस्तुना ।
स्वाहेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च ॥"

नित्याभिमुख्यस्य युष्मदो नित्यानभिमुखानां चास्मदादीनां न भवति । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावस्य ज्ञापितत्वादत्रान्तग्रहणम् ॥

तदेकवचनं सम्बुद्धिः ॥ ७६ ॥

तस्याः सम्बोधनप्रथमाया यदेकवचनं, तत् सम्बुद्धिसंज्ञं भवति । हे अग्ने ! । हे नदि ! ॥

सनादिद्विरुक्तौ पूर्वोऽभ्यासः ॥ ७७ ॥

सनादिनिमित्ते द्विर्वचने यः पूर्वः, सोऽभ्याससंज्ञो भवति । चिकीर्षति । मित्सति । सनादिद्विरुक्ताविति किम् । ग्रामो ग्रामो रमणीयः ॥

द्वयमभ्यस्तम् ॥ ७८ ॥

तस्यामेव द्विरुक्तौ पूर्वः परश्चेति द्वयमभ्यस्तसंज्ञं भवति । ददति । दधति । द्वाविति वक्तव्ये द्वयग्रहणं समुदितस्य संज्ञाप्रतिपत्त्यर्थम् ॥

जक्षादयश्चा शासः ॥ ७९ ॥

शासूपर्यन्ता जक्षादयः पञ्च धातवोऽभ्यस्तसंज्ञा भवन्ति । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति । आशास इति किम् । द्विषन्ति ॥

इग्यणः सम्प्रसारणम् ॥ ८० ॥

यणः स्थाने यथाक्रमं ये इकः, ते सम्प्रसारणसंज्ञा भवन्ति । कारीषगन्धीपुत्रः । उप्तम् । गृहीतम् । यणामिकां च यथासङ्ख्येन योगाद् दुहितरामिति लादेशस्येकः सम्प्रसारणत्वाभावाद् दीर्घो न भवति ॥

अदेङ् गुणः ॥ ८१ ॥

अकार एङौ च संज्ञाभाविता इतरे च प्रत्येकं गुणसंज्ञा भवन्ति । तरिता । चेता । स्तोता । पचन्ति । पचे । तपरकरणं पूर्वापरयोस्तत्कालार्थम् । तेन महर्षिः, महेश्वर इत्यादौ त्रिमात्रचतुर्मात्राणां स्थानिनामान्तरतम्यात् त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ॥

वृद्धिरादैच् ॥ ८२ ॥

आकार ऐचौ च संज्ञाभाविता इतरे वा प्रत्येकं वृद्धिसंज्ञा भवन्ति । मार्ष्टि । ऐतिकायनः । औपगवः । आरातीयः, रैमयं, नौमयम् । तपरकरणमैजर्थम् । आकारस्त्वनण्त्वात् सवर्णान् न ग्रहीष्यति । तेन खट्वैडका, खट्वौपगव इत्यादौ चतुर्मात्रा न भवन्ति ॥

वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ ८३ ॥

अचां मध्ये यस्यादिर्वृद्धिसंज्ञकस्तच्छब्दरूपं वृद्धसंज्ञं भवति ।

अचामिति जातौ बहुवचनम् । तेन द्वयोरपि भवति । शालीयः । ऐतिकायनीयः । औपगवीयः । आदिरिति किम् । सभासन्नयने भवः साभासन्नयनः ॥

हलो मिथः श्लिष्टाः संयोगः ॥ ८४ ॥

हलो हल्भिर्मिथः श्लिष्टाः संयोगसंज्ञा भवन्ति । जातौ बहुवचनम् । तेन द्वयोरपि संज्ञा भवति । आत्मनः । पर्वणः । समुदाये वाक्यसमाप्तिः । तेन प्रत्येकं संयोगसंज्ञाभावाद् दुर्यात इत्यादौ 'यण् संयोगादेरात' इति निष्ठानत्वं न भवति । हल इति किम् । तितउ । संयोगान्तलोपो हि स्यात् । मिथ इति किम् । पनसम् । 'स्कोः संयोगाद्योरन्ते च' इति लोपः स्यात् ॥

अलोऽन्त्यात् पूर्व उपधा ॥ ८५ ॥

धातुप्रातिपदिकादौ वर्णसमुदाये अन्त्यादलः पूर्वोऽलुपधासंज्ञो भवति । भिद् , भेत्ता । राजन् , राजानः । अल इति किम् । शिष्टः । समुदायात् पूर्वस्य मा भूत् ॥

अन्त्याजादिष्टिः ॥ ८६ ॥

प्रकृतिप्रत्ययादौ वर्णसमुदाये अजपेक्षया यो अन्त्योऽच् तदादिवर्णसमुदायष्टिसंज्ञो भवति । सर्वगः । पचते ॥

टिन्मित्किदादिः प्रकृतिप्रत्ययांश आगमः ॥ ८७ ॥

टाद्यनुबन्धः प्रकृतेः प्रत्ययस्य चावयवः अट् नुम् तुगादिरागमसंज्ञो भवति । प्रकृतेः—अकरोत् । नन्दति । अग्निचित् । प्रत्ययस्य—करिष्यति । पचन् । देवासः । आदिग्रहणाद् वैयाकरणः, दौवारिकः । टिन्मित्किदादिरिति किम् । प्रकृतिप्रत्ययावयवानामौपदेशिकानां मा भूत् । प्रकृतिप्रत्ययांश इति किम् । पदावयवानां प्रकृतिप्रत्ययानवयवानां च ठगादिप्रत्ययानां मा भूत् ॥

अदर्शनं लोपः ॥ ८८ ॥

प्रकृतिप्रत्ययानुबन्धादेः सामान्यशास्त्रादर्थतो वा प्रसक्तस्य यददर्शनमनुच्चारणं, तल्लोपसंज्ञं भवति । क्नोपयति । अग्निचित् । इष्टसुखः । प्रासादात् प्रेक्षते ॥

## प्रत्ययस्य लुक्श्लुलुपः ॥ ८९ ॥

प्रत्ययादर्शनं लुक्श्लुलुप्संज्ञं भवति। अनेकसंज्ञाविधानात् तद्भावितग्रहणमिह विज्ञायते---लुक्संज्ञाभावितमदर्शनं लुक्संज्ञं श्लुसंज्ञाभावितं श्लुसंज्ञं लुप्संज्ञाभावितं लुप्संज्ञम् इति। लुक्, अत्ति। श्लु, जुहोति। लुप्, पञ्चालाः। प्रत्ययस्येति किम्। 'कंसीयपरशव्ययोर्यञञौ लुक् च' इति छयतोरेवादर्शनं यथा स्यात्। कंसीयस्य विकारः कांस्यम्। परशव्यस्यायसो विकारः पारशवः॥

## अच् मात्रिको ह्रस्वः॥ ९० ॥

मात्राप्रमाणोच्चारणकालोऽच् ह्रस्वसंज्ञो भवति। अग्निचित्। सोमसुत्। आजिति किम्। प्रतक्ष्य। हल्समुदायस्य मात्रिकस्य ह्रस्वसंज्ञाया अभावात् तुङ् न भवति॥

## द्विमात्रो दीर्घः॥ ९१ ॥

द्विमात्रोच्चारणकालोऽच् दीर्घसंज्ञो भवति। कुमारी। अजित्येव। तितउ च्छत्रम्। अच्समुदायस्य दीर्घसंज्ञायामसत्यां 'दीर्घस्य पदान्तस्य वा' इति तुग्विकल्पो न भवति॥

## त्रिमात्रः प्लुतः॥ ९२ ॥

त्रिमात्रोच्चारणकालोऽच् प्लुतसंज्ञो भवति। देवदत्त३ आगच्छ॥

## उच्चैरुदात्तः॥ ९३ ॥

उच्चैरिति श्रुतिप्रकर्षो न गृह्यते उच्चैः पठतीति। किं तर्हि, ताल्वादिषु भागवत्सु स्थानेषु स्थाने स्थाने य उच्चो भागः, स गृह्यते। तत्र निष्पन्नोऽजुदात्तसंज्ञो भवति। यस्मिन्नुच्चार्यमाणे गात्राणां निग्रहो रूक्षता स्वरस्य संवृतता कण्ठविवरस्य भवति। ये। ते। के॥

## नीचैरनुदात्तः॥ ९४ ॥

समाने स्थाने नीचभागे निष्पन्नोऽजनुदात्तसंज्ञो भवति। यस्मिन्नुच्चार्यमाणे गात्राणां स्रंसनं स्वरस्य स्निग्धता कण्ठविवरस्य विवृतता भवति।

समाहारः स्वरितः ॥ ९५ ॥

उच्चत्वानुच्चत्वसमाहारोपलक्षितोऽच् स्वरितसंज्ञो भवति । कार्यम् । कन्या ॥

तस्यादित उदात्तमर्धह्रस्वम् ॥ ९६ ॥

उदात्तत्वा(ज्ञुक्तमर्ध ? नुदात्तत्व)समाहारोपलक्षितोऽच् स्वरित इत्युक्तम् । तत्र न ज्ञायते कस्मिन्नवकाशे उदात्तः, कस्मिन्ननुदात्तः । तदुभयमनेनाख्यायते — आदावर्धह्रस्वमुदात्तं, परिशिष्टमनुदात्तमिति । अर्धह्रस्वमिति चार्धमात्रा लक्ष्यते । ह्रस्वग्रहणमतन्त्रम् । सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरगुणविभागः । शक्यमित्यत्रादितोऽर्धमात्रा उदात्ता । कन्या इत्यत्रादितोऽर्धमात्रा उदात्ता । परिशिष्टाध्यर्धमात्रा अनुदात्ता । शक्तिके३ । अर्धमात्रा उदात्ता । परिशिष्टा अर्धतृतीयमात्रा अनुदात्ता ॥

ह्रस्वं लघु ॥ ९७ ॥

ह्रस्वमक्षरं लघुसंज्ञं भवति । अचीकरत् ॥

संयोगे गुरु ॥ ९८ ॥

ह्रस्वमक्षरं संयोगे परे गुरुसंज्ञं भवति । शिक्षा । भिक्षा ॥

दीर्घं च ॥ ९९ ॥

संयोग इति नानुवर्तते । दीर्घमक्षरं गुरुसंज्ञं भवति । ईहाञ्चक्रे । ईक्षाञ्चक्रे ॥

मुखनासिकावचनोऽनुनासिकः ॥ १०० ॥

मुखसहिता नासिका मुखनासिका, तयोच्चार्यते यो वर्णः सोऽनुनासिकसंज्ञो भवति । सँय्यन्ता । नॄँः पाहि । अभ्र आँ अपः । मुखग्रहणं किम् । नासिक्यानामनुस्वारयमानां मा भूत् । नासिकाग्रहणं किम् । कचटतपाना मा भूत् ॥

तुल्यस्थानास्यप्रयत्नः सवर्णः ॥ १०१ ॥

तुल्यौ स्थानप्रयत्नौ यस्य येन वर्णेनासौ वर्णस्तं प्रति सवर्णसंज्ञो भवति । तत्र —

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥"

अकुहविसर्जनीयाः कण्ठ्याः । इचुयशास्तालव्याः । उपूपध्मानीया ओष्ठ्याः । ऋटुरषा मूर्धन्याः । लृतुलसा दन्त्याः । ए ऐ कण्ठतालव्यौ । ओ औ कण्ठोष्ठ्यौ । वो दन्तोष्ठ्यः । जिह्वामूलीयो जिह्व्यः । अनुस्वार-यमा नासिक्याः । ञमङणनाः स्वस्थाना नासिकास्थानाः । अथास्यप्रयत्न आभ्यन्तरश्चतुर्विधः — स्पृष्टता ईषत्स्पृष्टता संवृतता विवृतता चेति । स्पृष्टं करणं स्पर्शानाम् । कादयो मावसानाः स्पर्शाः । ईषत्स्पृष्टमन्तस्थानाम् । अ-न्तःस्था यरलवाः । विवृतमूष्मणां स्वराणां च । ऊष्माणः शषसहाः । स्वरा अचः । तेषाम् ए ओ विवृततरौ । ताभ्यामपि ऐ औ, ताभ्यामप्याकारः । अकारः संवृतः । तस्य सावर्ण्यार्थं शास्त्रसंव्यवहार एव विवृतत्वं प्रतिज्ञायते । तत्र येऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं सानुनासिका निरनुनासिका ह्रस्वदीर्घप्लुतभेदादष्टादशधा विभिद्यन्ते, ते सर्वे कण्ठस्थाना विवृतकरणाः परस्परं सवर्णाः । एवमिवर्णास्तावन्तस्तालव्या विवृतकरणाः सवर्णाः । तथा उवर्णा ओष्ठ्या विवृतकरणाः सवर्णाः । तथा ऋवर्णा मूर्धन्या विवृतकरणाः सवर्णाः । लृवर्णस्य दीर्घा न सन्ति । प्रत्येकं द्वादशप्रभेदाः । एते द्वादश-दन्त्या विवृतकरणाः सवर्णाः । सन्ध्यक्षराणां ह्रस्वा न सन्ति । तानि प्रत्येकं द्वादशप्रभेदानि । तत्र एकाराः कण्ठतालव्या विवृततराः सवर्णाः । ऐकाराः कण्ठतालव्याः (अति)विवृततराः सवर्णाः । ओकाराः कण्ठोष्ठ्या विवृततराः सवर्णाः । औकाराः कण्ठोष्ठ्या अतिविवृततराः सवर्णाः । वर्ग्याः स्ववर्ग्यैः सवर्णाः । अन्तःस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च । तेऽन्योन्यं सवर्णाः । रेफोष्मणामतुल्यस्थानास्यप्रय-त्नत्वात् सवर्णा न सन्ति । बाह्यास्तु प्रयत्नाः 'स्थानेऽन्तरतम' इत्यत्रैवो-पयुज्यन्ते । ते च विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणता महाप्राणतोदात्तोऽनुदात्तः स्वरित इत्येकादश । स्पृष्टतादीनां स्थानकरण-व्यापारेण वर्णोत्पत्तिकाल एव भावादाभ्यन्तरत्वं, विवारादीनां तु वर्णनिष्प-त्तिकालादूर्ध्वं वायुवशेनोत्पत्तेर्बाह्यत्वमिति । तत्र वर्गाणां प्रथमद्वितीयाः श-षसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्गयमानां प्रथमेऽल्पप्राणाः । इतरे सर्वे महा-

प्राणाः । वर्गाणां तृतीयचतुर्थौ अन्तःस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तः । वर्गयमानां तृतीया अन्तःस्थाश्चाल्पप्राणाः । इतरे सर्वे महाप्राणाः । यथा तृतीयास्तथा पञ्चमाः । दण्डाग्रम् । यवाढकम् । दधीहते । मधूहते । होतृकारः । स्थानग्रहणं किम् । कचटतपानां तुल्यास्यप्रयत्नानामपि भिन्नस्थानानां मा भूत् । आस्यप्रयत्नग्रहणं किम् । इचुयशानां तुल्यस्थानानामपि भिन्नास्यप्रयत्नानां मा भूत् ॥

नाज्झलौ ॥ १०२ ॥

अज्झलौ तुल्यस्थानास्यप्रयत्नावपि परस्परं सवर्णसंज्ञौ न भवतः । आनडुहं चर्म । वैपाशो मत्स्यः । दण्डहस्तम् । दधिशीतम् । 'यस्ये'ति लोपः अकःसवर्णदीर्घश्च न भवति ॥

अं इत्यनुस्वारः ॥ १०३ ॥

अकार उच्चारणार्थः । अं इत्ययं नासिक्यो वर्णोऽनुस्वारसंज्ञो भवति । संस्कर्ता । विद्वांसः ॥

अः इति विसर्जनीयः ॥ १०४ ॥

अकार उच्चारणार्थः । अः इति कण्ठ्यो वर्णो विसर्जनीयसंज्ञो भवति । वृक्षः । उच्चैः ॥

ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १०५ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं प्रगृह्यसंज्ञं भवति । अग्नी इति । वायू इति । खट्वे इति । ईदूदेदिति किम् । वृक्षावत्र । द्विवचनमिति किम् । कुमार्यत्र । तपरकरणमसन्देहार्थं न तत्कालार्थम् । तेनैषां प्लुतादीनामितावपि सन्धिर्न भवति । अग्नी३ इति । वायू३ इति । खट्वे३ इति । पचेते३ इति ।

अमू अमी ॥ १०६ ॥

अमू अमी इत्येतौ प्रकृतसंज्ञौ भवतः । अमू अत्र । अमी आसते । अमू इति स्वरूपनियमात् साकचोऽपि द्विवचनान्तस्य पूर्वेणापि प्रगृह्यसंज्ञा

न भवति । अमुकेऽत्र । अमूसाहचर्यादमी इति रूपमदस एव गृह्यते । तेन अमनममः अमोऽस्यास्तीत्यमी । अम्यत्रेत्यत्र न भवति ॥

निपातः केवलाजनाङ् ॥ १०७ ॥

आङ्वर्जितो वर्णान्तरासंसृष्टो निपातः प्रगृह्यसंज्ञो भवति । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तत् । निपात इति किम् । अ! विष्णो! आगच्छ। केवलाजिति किम् । नेति, इतीह । जानु उ अस्य रुजतीति पूर्वेणैकादेशे शब्दान्तरत्वान्न भवति। अनाङिति किम् । आ इहि एहि । आ उदकान्ताद् ओदकान्तात् ॥

"ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥"

ओत् ॥ १०८ ॥

ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति । अथो अ । उताहो इति । निपात इत्येव । गवित्ययमाह । अगौर्गौः सम्पद्यत गोभवदिति गौणत्वात् । तिरोभवदिति लाक्षणिकत्वान्न भवति ॥

सम्बुद्धाविती वा ॥ १०९ ॥

सम्बुद्धौ य ओकारः, स इतौ परे प्रगृह्यो वा भवति । वायो इति, वायविति । सम्बुद्धाविति किम् । गवित्ययमाह । इताविति किम् । भानोऽत्र ॥

उञ् ॥ ११० ॥

उञिति निपात इतिशब्दे परे प्रगृह्यो वा भवति। उ इति विति ॥

ऊँ वास्य ॥ १११ ॥

अस्योञः स्थाने ऊँ इत्ययं दीर्घोऽनुनासिक आदेशो (वा) भवति प्रगृह्यसंज्ञश्च । तेन योगेन सह त्रैरूप्यम् । ऊँ इति, उ इति, विति ॥

सर्वविश्वावुभोभयौ डतरडतमावितरान्यतरावन्यत्वौ समसिमौ नेमश्च सर्वनामानि ॥ ११२ ॥

सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वविश्वयोस्तुल्यार्थत्वाद् उभस्योभयप्रकृतित्वाद् डतरडतमयोः प्रत्ययत्वाद् इतरान्यतरयोर्डतरादित्वाद् अन्यत्वयोः समानार्थत्वात् समसिमयोस्तु सर्वार्थत्वात् पृथग् विभक्तिः । सर्वस्मै । विश्वस्मै । उभौ हेतू । उभाभ्यां हेतुभ्याम् । उभयस्मै । कतरस्मै कतमस्मै । इतरस्मै । अन्यतरस्मै । अन्यस्मै । त्वस्मै । समस्मै । सिमस्मै । (नेमस्मै ।) समस्य सर्वार्थस्योपादानात् समे देशे यजेतेत्यादौ न भवति ॥

त्यत्तद्यदेतददासिदमेकद्वियुष्मदस्मद्भवतुकिमश्च ॥११३॥

त्यदादीनि सर्वनामसंज्ञानि भवन्ति । त्यस्मै । तस्मै । यस्मै । (एतस्मै ।) अमुष्मै । अस्मै । एकस्मै ............... । त्वादृशः । मादृशः । भवादृशः । कस्मै ॥

पूर्वपरावरदक्षिणोत्तरापराणि व्यवस्थायाम् ॥ ११४ ॥

स्वाभिधेयावध्यपेक्षो नियमो व्यवस्था । तस्यां गम्यमानायां पूर्वादीनि सर्वनामसंज्ञानि भवन्ति । पूर्वस्मै । परस्मै । अवरस्मै । दक्षिणस्मै । उत्तरस्मै । अपरस्मै । व्यवस्थायामिति किम् । दक्षिणाय गायकाय देहि ॥

स्वमज्ञातिधनाख्यायाम् ॥ ११५ ॥

स्वमित्येतदात्मात्मीयज्ञातिधनेषु वर्तते । तत्र ज्ञातिधनाभ्यामन्यत्र सर्वनामसंज्ञं भवति । स्वस्मै रोचते यत्, तत् स्वस्मै ददाति । यदात्मने रोचते, तदात्मीयाय ददातीत्यर्थः । अज्ञातिधनाख्यायामिति किम् । स्वाय दातुं स्वाय स्पृहयति, ज्ञातये दातुं धनाय स्पृहयतीत्यर्थः ॥

अन्तरमपुरि बहिर्योगोपसंव्यानयोः ॥ ११६ ॥

अन्तरशब्दो बहिर्योगे उपसंव्याने च सर्वनामसंज्ञो भवति । न चेत् पुरि वर्तते । अन्तरस्मै गृहाय । नगरबाह्यायेत्यर्थः । अन्तरस्मै शाटकाय । अपुरीति किम् । अन्तरायां पुरि वसति । बहिर्योगोपसंव्यानयोरिति किम् । अयमनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति । मध्यवचनोऽत्रान्तरशब्दः ॥

**प्राग्रीश्वरान्निपाताः ॥ ११७ ॥**

"अधेरीश्वर" इतीश्वरसंशब्दनात् प्रागित ऊर्ध्वं येऽभिधास्यन्ते, ते निपातसंज्ञा वेदितव्याः । प्राग्वचनं संज्ञासमावेशार्थम् । तेनेह प्रकरणे यत्नान्तरमन्तरेण संज्ञासमावेशो न भवति ॥

**असत्त्वे चवा(हा)हैवैवंनूनंशश्वत्सूपत्कूपत्कुविन्नेच्चेच्चण्कच्चिद्यत्रनहहन्तमाकिर्नकिंमामाङ्ननञ्नह्यः ॥११८॥**

इदं तदित्यादिसर्वनामव्यपदेश्यं विशेष्यं सत्त्वम् । ततोऽन्यत्र वर्त्तमानाश्चादयः पञ्चविंशतिर्निपातसंज्ञा भवन्ति । अर्थाश्चैषां समुच्चयादयोऽनेकप्रकारा लोकतो वेदतश्चावगन्तव्याः । यदाहुः —

"उच्चावचेष्वर्थेषु निपतन्तीति निपाताः ॥
केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः ।
आगमा अपि केऽपि स्युः सम्भूयार्थस्य साधकाः ॥"

तत्र द्योतकाः, च वा ह अह एवादयः । तथाचोक्तम् —

"चो न समुच्चयवाची षष्ठ्यनुपजनादसत्त्ववचनाच्च ।
एकेनानभिधानात् प्रयोगनियमाद् गुणाश्रयणात् ॥"

वाचकाः, शश्वत् कुवित् प्राह्णे प्रगे इत्येवमादयः । अनर्थकाः, कर्मामिद्धेत्यादयः । सम्भूयार्थस्य साधकाः, नहवै नवै नखलु मास्मेत्यादयः । असत्त्व इति किम् । यत्रैषां सत्त्वरूपा अनुकार्यादावर्थे वृत्तिस्तत्र मा भूत् । चः समुच्चये । एवोऽवधारण इति । च इति समुच्चये पादपूरणादावपि । वृक्षश्च प्लक्षश्च । नैव च तथैव च । वा इति विकल्पोपमादिषु । "यवैर्वा व्रीहिभिर्वा यजेत" । "मणी वोष्ट्रस्य लम्बेते" । ह अहेति विनियोगे तिरस्क्रियायामपि । त्वं ह ग्रामं गच्छ । अयं हारण्यं गच्छतु । स्वयं ह ओदनं भुङ्क्ते उपाध्यायं सक्तून् पाययति । स्वयं ह रथेनयाति उपाध्यायं पदातिं गमयति । अह इति पूजायामपि । पश्य पश्यताहेति । एवेत्यवधारणे नियोगेऽपि । अहमेव स्वयमिदं वदामि । अद्यैव । इहैव । एते चादयः पञ्च, यद्योगे वसन्नसादयो न भवन्ति । एवमिति प्रकृतपरामर्शे प्रकारेऽपि । "एवंवादिनि

देवर्षौ ।" एवं कुरु । नूनमिति निश्चये वितर्कादावपि । नूनं सा ते प्रतिवरं जरिम्णे । नूनमस्ति नोऽश्व इति । शश्वदिति सार्वकाल्ये सातत्यादावपि । शश्वदकरोत् । शश्वद् गच्छ । सूपत् कूपदिति प्रश्नवितर्कप्रशंसासु । सूपदयं पठति । कूपदयं गायति । कुविदिति भूर्यर्थे योगप्रशंसास्तिभावेष्वपि । कुविदङ्ग! यवमन्तः, कुवित् करोति । एवमेते सप्त एवादयः 'एवादीनामन्त' इत्यन्तोदात्ता भवन्ति । नेदित्याशङ्कायाम् । नेज्जिह्मायन्तो नरकं पताम । चेदिति यद्यर्थे । उपाध्यायश्चेदागच्छेद्, आशंसे युक्तोऽधीयीय । चण् इति चेदर्थे । त्वं च गमिष्यसि, फलिष्यति नः कामः । णकार'श्चण्कच्चिद्यत्रयुक्तमि'ति विशेषणार्थः । कच्चित् कामप्रवेदने । कच्चिद् जीवति ते माता । यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि न मर्षयामि गर्हामहे आश्चर्यं यत्र तत्रभवान् वृषलं याजयेदिति । नहेति प्रत्यारम्भे । नह भोक्ष्यस इति । हन्तेति हर्षविषादयोः सम्प्रदानेऽपि । हन्त जीविताः स्म । हन्त हताः पथिकगेहिन्यः । इदं मनुष्येभ्यो हन्त । माकिरिति निषेधे । रक्षामाकिर्नो अघशंस(ईश)त । नकिमित्युपमायाम् । मेघो नकिं वर्षति । मा माङ् न नञ् नहि इत्येते प्रतिषेधे । मा मा भवतु तस्य पापम् । मा कार्षीत् । ङकारो माङिति विशेषणार्थः । नैकः । मृगो न भीम इत्युपमायामपि । नञ्, ततोऽन्यस्तत्सदृशस्तद्विरुद्धस्तदभाव इति नञर्थाः, ईषदर्थे अवक्षेपोपधावपि । यथा — अनग्निः । अब्राह्मणः । असितः । अमक्षिकम् । अनुदरा कन्या । अपचसि त्वं (स्व ?)वृषल! । नहि नहि प्रेमानिमित्ते सतीति ॥

वावत्वावत्वैतुवैन्वैनुवैरैवैश्रौषड्वौषडषडबड्बाडवेट्पाट्प्याट्फट्छम्बडधातस्वधास्वाहालञ्चनहयः ॥ ११९ ॥

वावादयः पञ्चविंशतिरसत्त्वे निपातसंज्ञा भवन्ति । वाव इत्येवार्थे । अशरीरं वाव सन्तम् । त्वाव इति विशेषयुक्तं वावार्थे । अयं त्वाव प्रशस्यते । त्वै तुवै इति विशेषे । अयं त्वै प्रकृष्यते, अयं तुवै प्रकृष्यते । न्वै नुवै इति वितर्के । को न्वै एषोऽभिगच्छति । को नुवै एष गच्छति ।

रै इत्यनादरे । त्वं ह रै करिष्यसि । वै इति पादपूरणे विशेषेऽपि । यो वै युवाप्यधीयानः । बृहस्पतिर्वै देवानां पुरोहितः । श्रौषड् वौषड् वषडिति हविस्सम्प्रदाने । अस्तु श्रौषट् । (वौषट्)वषडिन्द्राय । बडिति प्रशंसायाम् । बण्महाँ असि सूर्य! । बाडिति वषडर्थे । वृषदंधेडप्सुषु(?)देवेद् । पाद् प्याट् इति प्रशंसायाम् । पाद् श्रव्यं पठति । प्याट् शीघ्रं पठति । फट् विघ्नप्रोत्सारणे । हुं फट् प्रतिहतोऽसि । छंवट् इत्यन्तःकरणे आभिमुख्येऽपि । छंवट्-संशुद्ध्या सर्वं जयति । छंवण्मुखो धावति । अथ आत् इत्येतावदर्थे । अथैनं वृका रभसासो अद्युः । विश्वकर्मा विमना आद् विहायाः । स्वधा स्वाहा इति यथासङ्ख्यं पितृदेवतासम्प्रदानयोः । पितृभ्यः स्वधा । अग्नये स्वाहा । अलमिति पर्याप्तिभूषणवारणेषु । तत्र पर्याप्त्यर्थः स्वरादिषु, भूषणार्थो गतिष्विति वारणार्थ एवेह गृह्यते । अलं कृत्वा । अलं बाले! रोदनेन । चनेति चिदर्थे । किंवृत्तात् पर एव चास्य प्रयोगः । कश्चन । काचन । किञ्चन । कथञ्चन । हि इति स्फुटार्थे हेतौ पादपूरणादावपि । को ह्यबालिशो हस्तगतं द्रव्यं परगतं कुर्यात् । अग्निरिहास्ति, धूमो हि दृश्यते । यो हि दीर्घासिताक्षस्येति ॥

अथोमथोनोभोभगोअघोहंहोहोअहोआहोउताहोहाही-
हेहेहयेऽय्ययेऽररेऽङ्गरेऽरेऽबेननवः ॥ १२० ॥

अथादयः पञ्चविंशतिरसत्त्वे निपातसंज्ञा भवन्ति । अथ इत्यधिकारानन्तर्यप्रश्नाद्यर्थो मङ्गलप्रयोजनश्च । अथ शब्दानुशासनम् । अथातो धर्मजिज्ञासा । नित्यः शब्दोऽथानित्य इति । ओमित्यभ्यादानाभ्युपगमसमाप्त्यर्थो मङ्गलप्रयोजनश्च । ओम् अग्निमीले पुरोहितम् । ओं श्राद्धे क्षणः क्रियताम् । ब्रह्म भूर्भुवस्स्वरोम् । ब्रह्मवाचकस्तु सत्त्ववाची स्वरादिषु । अथो इति प्रस्तावान्वादेशानन्तर्याद्यर्थो मङ्गलप्रयोजनश्च । अथो शरत् तेन मदर्थमुज्झिता । अथो एनं परिवर्त्तय । छन्दोऽधीष्वाथो व्याकरणम् इति । नो इति निषेधे । नो पचति । भो भगो अघो हंहो हो अहो इति सम्बोधनार्थाः । भो ब्राह्मणाः! । भगो ब्राह्मणाः! । अघो ब्राह्मणाः! । हंहो एहि । हो पान्थ! । अहो आगच्छ । अहो रूपमहो रूपमित्यहो विस्मयादावपि । आहो उताहो इति वितर्के । स्थाणुरयमाहो पुरुषः । गौरयमुताहो गवयः । हा इति विषादशुग्जुगुप्सासु । कन्यान्तःपुरमेव हा

प्रविशति। हा प्रिये जानकि!। हा देवदत्तम्। ही इति विषादे विस्मये च। शतकृत्वोऽप्यधीयाना ही न विद्मो जडा वयम्। हतविधिलसितानां ही विचित्रो विपाकः। हे है हये अयीति सम्बोधनार्थाः। हे देवदत्त!। है यज्ञदत्त!। हये जाये! मनसा तिष्ठ। अयि विजहीहि दृढोपगूहनम्। (अये इति स्मरणे।) अये रामो दाशरथिः। अरेरे इत्यवक्षेपसम्बोधने। (अरेरे) महाराजं प्रति कुतः क्षत्रियाः। अङ्ग इति पूजा(यां) सम्बोधने च। अङ्ग स्म विद्वन्! माणवकमध्यापय। अङ्ग कूज। इदानीं ज्ञास्यसि जाल्म!। (रे) अरे अबे इति हीनसम्बोधने। (अ?)रे! नवा। अरे जायायै। अबे वृषल! किं ब्रवीषि। नन्विति परमताक्षेपानुज्ञापनापृष्टप्रतिवचनेषु। ननु वक्तृविशेषनिस्पृहाः। ननु जानीहि माम्। अकार्षीः कटं देवदत्त!। ननु करोमि भोः॥

शुकंसुकंनुकंनहिकमूंहुमुञ्सुञ्कंहंकिंहिंमत्कद्यत्तदिच्चित्कित्स्विदुतबतेवतुनवः॥ १२१॥

शुकमित्यादयः पञ्चविंशतिरसत्त्वे निपातसंज्ञा भवन्ति। शुकमिति शैघ्र्ये। शुकं गच्छति। सुकमित्यतिशये। सुकं शोभते। नुकमिति वितर्के। अहिर्नुकम्। नहिकमिति निषेधे। नहिकमस्ति ते किञ्चित्। ऊमिति स्त्रीणां विकारवचने। ऊं नाहमिदं वेद्मि। हुमिति धिक्करण (स्मरण) भर्त्सनेषु। मुञ्च हुम्। हुं स त्वमसि। हुं निर्लज्जापसर। उञिति वितर्कसम्बोधनपादपूरणेषु। क उ एति। उ उत्तिष्ठ। तदु वायुः तदु चन्द्रमाः। उ इत्यच्प्रतिरूपकोऽप्यस्ति। अस्य त्वयं विशेषः। ऊँ इति पक्षे भवति। सुञित्यतिशये। सुभीषुणः सखीनाम्। ञकार 'उकः सुञि'त्यादौ विशेषणार्थः। कमित्यनर्थकः पादपूरणे। शिशिरं जीवनाय कम्। हमित्यसम्मतौ। हं क एवमाहुः। किमिति प्रश्नक्षेपपदर्थातिशयेषु। किमयं स्थाणुरुत पुरुषः। किमयमपि ब्राह्मणः। न किमप्यस्यास्ति। किमप्येष लभते। हिङ्कारः स्तोभवचनः। न चाहिंकृत्य साम गीयते। अदित्याश्चर्ये। कस्तद् वेद यदद्भुतम्। कदिति प्रश्ने। कद् रुद्राय प्रचेतसे। यत्तदित्येतौ हेत्वर्थे। यदयमधीते। तज्जानाति। इदित्यनर्थकः। वक्ष्यन्तीवेदागनीगन्ति कर्णम्।

चिदित्यसाकल्याप्यर्थोपमानासम्मातिषु । किञ्चित् प्रयच्छति । न किञ्चिद् ब्रवीति । अग्निश्चिद् भायात् । कुल्माषांश्चिदाहर । क्विदिति भ(क्षण? र्त्सन)पादपूरणयोः । क्वित् कितव! कदर्योऽसि । क्वित् क्वैतदुपपद्यते । स्विदिति प्रश्ने वितर्के च । कः स्विदेकाकी चरति । अधःस्विदासीदुपरिस्विदासीत् । उत इति वितर्कबाढार्थप्रश्नेषु । स्थाणुरयमुत पुरुषः । उत शिरसा पर्वतं भिन्द्यात् । उत दण्डः पतिष्यति । बत इति खेदानुकम्पासन्तोषविस्मयामन्त्रणेषु । अहो बत महत् कष्टम् । हता बत वराकी । एते बत जीविताः स्मः । बत बालः प्रगल्भते । क्व बत यास्यसि । इव ईषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेषु । कडार इवायम् । चन्द्र इव मुखम् । लिम्पतीव तमोऽङ्गानि । कथमिवैतद् भविष्यति । तु इति विशेषावधारणपूजाव्यावृत्तिपादपूरणेषु । मृष्टं पयो मृष्टतरं तु मांसम् । आत्मादयस्तु प्रमेयम् । यस्तु माणवको भुङ्क्ते । त्वं तु किं करिष्यसि । आख्यास्यामि तु । नु इति प्रश्नप्रतिवचनोपमानवितर्केषु । को नु वाचमीरयत्यन्तरिक्षे । अकार्षीः कटं देवदत्त!, अयं नु करोमि भोः । वृक्षस्य नु ते पुरुहूत! वयाः । अहिर्नु रज्जुर्नु ॥

यच्चकच्चनाकिमुतकिलकिङ्किलाकिंस्विदुतास्विदाहोस्विदहहनहवैनवैनवान्यदन्यत्रशबथकिंविषुपशुखलुयदिनामयदुतप्रत्युतयदाजातुयदयः ॥ १२२ ॥

यच्चेत्यादयः पञ्चविंशतिरसत्त्वे निपातसंज्ञा भवन्ति । यच्च इत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि न मर्षयामि गर्हामहे आश्चर्यं यच्च तत्रभवान् वृषलं याजयेत् । कच्चनेति कच्चिदर्थे । सखे! कच्चन कुशल्यसि । किमुत किंपुनरर्थे । प्राकृतोऽपि पुमान् नावमन्तव्यः, किमुत राजा । किलेत्यागमारुचिन्यक्करणेषु । जघान कंसं किल । (एवं किल) केचिद् वदन्ति । अयं किल योत्स्यते । किङ्किलेति क्रोधाश्रद्धयोः । न मर्षयामि न श्रद्दधे किङ्किल तत्रभवान् वृषलं याजयिष्यति । किंस्विद् उतस्विद् आहोस्विदिति वितर्कार्थाः । स्थाणुरयं किंस्वित् पुरुषः । स्थाणुरयमुतस्वित् पुरुषः । स्थाणुरयमाहोस्वित् पुरुषः । अहहेति विस्मये विषादे च । अहह महतां

निस्सीमानश्चरित्रविभूतयः । अहह कष्टमपण्डितता विधेः । नहवै निष्ठितनिषेधावधारणे । नहवै सशरीरस्य प्रियाप्रिययोरुपहतिरस्ति । नवै इति निषेधावधारणविशेषनिषेधयोः । नवै स्त्रैणानि सख्यानि सन्ति । नवा उ एतन्म्रियसे न रिष्यसि । नवेति निषेधे । नवा कुर्यात् । अन्त्रादिष्वन्यार्थे । देवदत्त आयातोऽन्यच्च यज्ञदत्तः । अन्यत्रेति वर्जने । पतितां न बिभृयादन्यत्र मातुः । शबिति प्रतिग्रहणे । शप्करोति । अथकिमित्यभ्युपगमे । देवदत्त ! गच्छसि, अथकिम् । विषु इति सर्वतोभावे । विषु अञ्चतीति विष्वक् । पशु इति सम्यगर्थे । लोधं नयन्ति पशु मन्यमानाः । खल्विति निषेधवाक्यालङ्कारयोः । खलु कृत्वा । अथो खल्वाहुः । यदिनामेति प्रकृतान्यथात्वे । विप्रोऽसि यदिनाम मूर्खः । यदुतेति वाक्यार्थनिर्देशे । स त्वया वाच्यो यदुतेहागम्यताम् । प्रत्युतेत्युक्तवैपरीत्ये । न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया । यदेति हेतौ । यदा जनैः सर्वगतस्त्वमुच्यसे । जात्विति कदाचिदर्थे । न जातु कामः कामानामुपभोगेन शाम्यति यदीति पक्षान्तरे । यदि शमः, किं तपसेति ॥

**यथाकथाचयथातथापुत्घपुरायावत्तावदिष्ट्यामर्यामनामस्मेतिहसहामासमंसत्रासाकंसार्धमीमास्सीमामितयः ॥ १२३ ॥**

यथाकथाचेत्यादयः पञ्चविंशतिरसत्त्वे निपातसंज्ञा भवन्ति । यथाकथाचेत्यनादरे । यथाकथाच दीयते । यथेति योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु । यथाभिरूपम् । यथावृद्धम् । यथा देवदत्तस्तथा यज्ञदत्तः । तथेति समुच्चयाभ्युपगमनिदर्शनसादृश्येषु । देवदत्तो व्रजतु तथा यज्ञदत्तः । तथेति स प्रतिज्ञाय । तथाहि ते शीलमुदारदर्शने ! । इदमपि तथा । पुदिति कुत्सायाम् । पुत् गलतीति पुद्गलः । घेति पादपूरणे । आ घा येऽग्निमिन्धते । 'ऋचि तुनुघे'त्यादिना छान्दसं दीर्घत्वम् । पुरेति भविष्यदासत्तिभूतविप्रकर्षयोः । अधीष्व माणवक ! पुरा विद्योतते विद्युत् । नटेन स्म पुराधीयते । पुरातनः पुरुषः । यावदिति साकल्यक्रमावधारणावाधिषु कालावधावपि । यावद् दत्तं तावद् भुक्तम् । यावदमत्रं ब्राह्मणानामन्त्रयस्व । पाटलीपुत्रं यावद् वृष्टो देवः । यावद् गिरः खे मरुतां चरन्ति । तावदिति साकल्यक्रमावधिषु

यावद् दत्तं तावद् भुक्तम् । त्वमेव तावत् परिचिन्तय स्वयम् । तावदधीष्व यावद् बुध्यसे । दिष्ट्येत्यानन्दे । दिष्ट्या वर्धस्व । मर्या इति सीमबन्धने । मर्या आदीयते इति मर्यादा । आम इत्यानुगुण्ये । गच्छ ग्रामम्, आम गच्छामि । नामेति प्रामाण्यसम्भावनाक्रोधाभ्युपगमकुत्सनेषु । हिमालयो नाम नगाधिराजः । कथं नाम समेष्यसि । को नाम मामधिक्षिपति । एवं नामैतत् । को नामायं सवितुरुदयः । स्मेति (अतीते) वाक्यपूरणे च । इति स्मोपाध्यायः कथयति । अङ्ग स्म विद्वन्! माणवकमध्यापय । इतिह लोकप्रवादागमयोः । इतिहाकरोत् । इतिह स्माह भगवान् । सह अमा समं सत्रा साकं सार्धमित्येते क्रियादियोगे । पुत्रेण सहाधीते । पुत्रेण सह पण्डितः । पुत्रेण सह धनवान् । एवममा समं सत्रा साकं सार्धमिति । ईमित्यनर्थकः पादपूरणे । का ईमरे पिशिङ्गिला । आः इति पीडाकोपयोः । आः कष्टं वर्तते । आः एषामपि क्षिपति । सीमिति सर्वतोभावे । प्रसीमादित्या असृजन् । आमिति प्रतिवचनावधारणयोः । आं किं मां ब्रवीषि । आं चिरस्य प्रतिबुद्धोऽस्मि । इतिशब्दो बह्वर्थः । इति स्म ब्रह्मवादिनो वदन्ति । क्वचिद् व्यवस्थायाम् । 'ज्वलितिकसन्तेभ्योणः' । क्वचित् प्रकारे । गौरश्वः पुरुषो हस्तीति । क्वचिद्धेतौ । हन्तीति पलायते । क्वचित् पदार्थविपर्यासे । गौरित्ययमाह । क्वचिदधिकारार्थे । अथेत्ययं वर्तते । क्वचिच्छब्दस्वरूपव्यापारकथने । गुणवृद्धी इत्येव ये गुणवृद्धी । क्वचिच्छब्दप्रादुर्भावे । इति पाणिनिः । क्वचिद् विवक्षानियमे । तदस्यास्त्यस्मिन्निति मतुप् । क्वचित् परिसमाप्तौ । पृथिव्यादयो नवेति । क्वचिदर्थवतः शब्दभागस्य व्यवच्छेदकत्वे । अथ गौरित्यत्र कः शब्द इति । क्वचिद् वाक्यार्थस्य कर्मभावावद्योतकत्वे । इह पश्यामः कर्माणि द्विवचनबहुवचनान्युदाह्रियन्त इति। क्वचित् प्रकृतपरामर्शे । इत्युक्तवन्तं परिरभ्य दोर्भ्याम् । क्वचिद् वक्ष्यमाणपरामर्शे । विनिश्चितार्थामिति वाचमाददे । उपलक्षणं चैतच्चादीनामर्थकथनम्, अनेकार्थत्वात् ॥

अहं शुभं कृतं पर्याप्तं येन तेन चिरेणान्तरेण ते मे चिरायाह्नाय चिरादकस्माच्चिरस्यान्योन्यस्य ममैकपदेऽग्रे प्रगे प्राह्णे हेतौ रात्रौ वेलायां मात्रायामित्यादयः सुप्प्रतिरूपाः ॥ १२४ ॥

अहमित्यादयः पञ्चविंशतिरसत्त्वे सुबन्तप्रतिरूपा निपातसंज्ञा भवन्ति। अहमित्यहङ्कारे। अहंयुः। शुभमिति कल्याणे। शुभंयुः। कृतमिति निवारणनिषेधयोः। वत्स! कृतं साहसेन। कृतं पुरुषशब्देन जातिमात्रावलम्बिना। पर्याप्तमिति सामर्थ्यो(?)*। बाणं न किञ्चिल्लभ्यते। ते इति त्वयार्थे। श्रुतं ते राजशार्दूल!। मे मयार्थे। श्रुतं मे भरतर्षभ!। चिरायेति चिरेणतुल्यार्थः। (चिराय निर्धनो भूत्वा।) अह्नायेति शीघ्रे। अह्नाय सा नियमजं क्लममुत्सर्जे। चिरादिति चिरायार्थे। चिरादागतोऽसि। अकस्मादित्यतर्कितोपनते। किमित्यकस्मात् कुप्यसि। चिरस्येति चिरादर्थे। चिरस्य याथार्थ्यमलम्भि दिग्गजैः। अन्योन्यस्येति परस्परार्थे। अन्योन्यस्य स्मरति। ममेति प्रत्यगात्मसम्बन्धे। ममेत्यस्य भावो ममत्वम्। एकपदे इत्यकस्मादर्थे। सर्वमेकपदे नष्टम्। अग्रे इति पुरस्तादर्थे। (अग्रेसरः।) प्रगे इति प्रातरर्थे। प्रगेऽमी च प्रबुध्यन्ते। प्राह्णे इत्यह्नः प्रारम्भे। प्राह्णे गच्छति। हेताविति निमित्तार्थे। हेतौ हृष्यति। रात्राविति निशायामर्थे। रात्रौ चर। वेलायामिति कालपरिमाणे। वेलायां चरः। मात्रायामित्यल्पपरिमाणे। मात्रायां भोजक इति। त एतेऽहंप्रभृतयो यथाक्रमं प्रथमादिसुब्विभक्त्यन्तप्रतिरूपकाः॥

अस्ति नास्त्यस्यस्मि विद्यते भवत्येहि ब्रूहि मन्ये शङ्कऽस्तु भवतु पूर्यते स्यादासाह वर्तते नवर्तते याति नयाति पश्य पश्यतादह्नादङ्कातङ्कादयस्तिङ्प्रतिरूपाः॥ १२५॥

अस्तिप्रभृतयः पञ्चविंशतिरसत्त्वे तिङ्प्रतिरूपा निपातसंज्ञा भवन्ति। अस्तीति सत्तायाम्। अस्तिक्षीरा ब्राह्मणी। नास्तीति तत्प्रत्यनीके। नास्तिकः। असीति युष्मदर्थानुवादे। कास्यरण्ये प्रताम्यसि। अस्मीत्यस्मदर्थानुवादे। चन्द्रग्रहणेन (विना नास्मि) रमे। विद्यते भवति इत्येतावस्त्यर्थे। विद्यते नाम भवति नाम तत्रभवान् वृषलं याजयिष्यति। एहि इति प्रहासा(र्थे? दौ)। एहि मन्ये रथेन यास्यसि। एहि न त्वया सह जल्पयिष्यामि।

* अत्र 'र्थ्यवारणयोः। त्वयैव पर्याप्तम्। पर्याप्तमिहान्येन। येन तेनेति हेतौ। वितर गिरमुदारां येन मूकाः पिकाः स्युः। नदीं तेन जगाम। चिरेणेति कालभूयस्त्वे। चिरेण मित्रव्यसनी सुदमो दमघोषजः। अन्तरेणेति मध्यविनार्थयोः। मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः। अन्तरेण' इत्येतावदपेक्षितम्।

ब्रूहीति प्रैषादौ। अग्नये अनुब्रूहि। मन्ये शङ्के इति वितर्के। मन्ये मार्ताण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः। शङ्के शशाङ्कोऽयमिति। अस्तु भवतु पूर्यत इति निषेधे। अस्तु शास्त्रा। भवतु भक्त्या। पूर्यते प्रणामेन। स्यादित्यनेकान्ते पक्षान्तरसम्भावनादावपि। स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च। स्यान्मतम्। आसेति बभूवार्थे। लावण्य उत्पाद्य इवास यत्नः। आहेत्युवाचार्थे। अथाह वर्णी विदितो महेश्वरः। वर्तत इति सोल्लुण्ठनाङ्गसंवरणे। वन्ध्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते। नवर्तत इत्यमङ्गलप्रतिषेधे। नवर्तते समराभिमुखे पत्यावश्रुनिपातः। यातीति शक्यत इत्यर्थे। इदं मे कर्तुं (का?)याति। नयातीति न शक्यत इत्यर्थे। इदं मे कर्तुं नयाति। पश्य पश्यतेत्येतौ प्रत्येकं पूजाश्चर्ययोः। पश्य माणवको भुङ्क्ते। पश्य शिशुरपि विद्वान्। पश्यत माणवको भुङ्क्ते। पश्यत शिशुरपि विद्वान्। आदहेत्युपक्रमहिंसाकुत्सनेषु। आदह भक्तस्य भोजनाय। आदहारीन् पुरन्दर!। कुर्वादह यदि करिष्यसि। आदङ्क आतङ्क इत्येतौ कुत्साविनाशयोः। (आदङ्क) आतङ्क क्षीरं दधिभवनाय। आदिग्रहणाद् यथादर्शनमन्येऽपि भवन्ति॥

अप्रतिरूपादयश्च॥ १२६॥

अप्रतिरूपादयोऽसत्त्वे निपातसंज्ञा भवन्ति। एते च सम्बोधनभर्त्सनपूज्यतन्त्रप्रतिषेधादिषु यथासम्भवं भवन्ति। अ अपेहि। आ एवं नु मन्यसे। इ इन्द्रं पश्य। ई ईदृशः संसारः। उ उत्तिष्ठ। ऊ ऊषरे बीजं वपसि। ए इतो भव। ओ ओ श्रावय। ऋ ॠ ऌ ॡ ऐ औ इत्येते मन्त्रस्तोभादौ शाखान्तरेषु च सम्भवन्ति। आदिग्रहणात् कुं खुं गुं घुम् इत्यादयोऽन्येऽपि भवन्ति॥

प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधिप्रतिपर्युपात्यपिसूदभयः॥ १२७॥

प्रादयो विंशतिरसत्त्वे निपातसंज्ञा भवन्ति। प्रणसम्। पराशरः। अपसव्यम्। सङ्कटम्। अनुकूलम्। अवकटारम्। निर्मक्षिकम्। दुष्कुलम्। विशालः। आकडारः। नितराम्। अधिस्त्रि। प्रतिकूलः। शलाकापरि। उपकुम्भम्। अतितैसृकम्। अपि कुर्यात्। सुभद्रः। उत्कटः। अभितः॥

उपसर्गाः क्रियायोगे ॥ १२८ ॥

प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति । प्रणयति । परिणायकः । क्रियायोग इति किम् । प्रगतो नायकोऽस्मादसौ प्रनायको देशः । यत्क्रियायुक्तास्तं प्रति पूर्वपदप्रकृतिस्वरेण निपातस्वरः सिद्धो भवति । तत्रोपसर्गाश्चतुर्धा भवन्ति —

"धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥"

बाधते यथा प्रतिष्ठते । तमनुवर्तते यथा अधीते । तमेव विशिनष्ट्यन्यो यथा प्र(प ? भ)वति । अनर्थको यथा विजयते । एषां च पञ्चभ्यः प्रायेण प्रयोगो भवति । यथा आहरति । व्याहरति । अभिव्याहरति । समभिव्याहरति ।

अथैषां यथायथमर्थाः कथ्यन्ते । तत्र प्रशब्द आदिकर्मनर्मजन्मोपरमैश्वर्यौदार्यप्रकर्षापकर्षाविर्भावतिरोभावभूषणदूषणोपसरावसरवियोगनियोगप्रकथनोपयोगसेवासाहसशुद्धिसमृद्धिदर्शनानवधानविरचनावञ्चनपर्याप्तिशक्तिसंज्ञासन्न्यासहिंसार्थवैपरीत्यादिषु । तत्रादिकर्मणि प्रक्रमते । नर्मणि प्रहसति । जन्मनि हिमवतो गङ्गा प्रभवति । उपरमे प्रभाता रजनी । ऐश्वर्ये क्व न प्रभविष्णवः प्रभवन्ति । औदार्ये प्रतपति । प्रकर्षे प्रगल्भते । अपकर्षे प्राश्नाति । आविर्भावे प्रकाशते । तिरोभावे प्रलीयते । भूषणे कन्यां प्रसाधयति । दूषणे बहु प्रलपति । उपसरे पुरोवात आशाः प्रयापयति । अवसरे प्रस्तावे ... पदिति । वियोगे वसन्ते प्रवसति । नियोगे प्रयुङ्क्ते । प्रकथने शिष्येभ्यः प्रव(सति ? क्ति) । उपयोगे शतं प्रकुरुते । सेवायां गणकान् प्रकुरुते । साहसे परदारान् प्रकुरुते । शुद्धौ मुनीनां मन इव पयः प्रसीदति । समृद्धौ प्रचीयते । दर्शने प्रेक्षते । अनवधाने प्रमाद्यति । विरचनायां प्रबध्नाति । वञ्चने प्रतारयति । पर्याप्तौ जघनेऽस्या वासो न प्रभवति । शक्तौ सन्तापाय प्रभवति । संज्ञायां प्रबुध्यते । सन्न्यासे प्रव्रजति । हिंसायां प्रहरति । अर्थवैपरीत्ये प्रतिष्ठते ।

पराशब्दो वधप्रमर्शनप्रतिषेधाप्रसहनाविक्रमोपरमानभिगमानाभिमुख्यन्यग्भवनाभिभवनिरसननिर्वेदाशुव्याप्त्याश्वपसरणत्रापणापह्नानादिषु । तत्र वधे पराहन्ति । प्रमर्शने परामृशति । प्रतिषेधे पराक्षिपति । अप्रसहने अध्ययनात् पराजयते । विक्रमे पराक्रामति । उपरमे परैति । अनभिगमे परा-

गच्छति। अनाभिमुख्ये परावर्तते। न्यग्भवने तेऽसुरा हेलयो हेलय इति वदन्तः पराबभूवुः। अभिभवे परान् पराभवति। निरसने पराकरोति। निर्वेदे पराभग्नः शेते। आशुप्राप्तौ परापतति। आश्वपसरणे पलायते। प्रापणे परायति। अपह्नाने पराह्वयतीति॥

अपशब्दो व्यपायोद्वापहर्षानुत्कर्षदोषदूषणेप्साह्रासोत्प्रासाविष्कारवारणन्यक्करणनिह्नवान्यथात्वद्रोहदुरभिसन्धिव्याधिव्यावृत्तिमुक्तिप्रतिदानस्तेयव्याजपूजार्थवैपरीत्यादिषु। तत्र व्यपाये अपैति। उद्वापे अपनयति। हर्षे अपस्किरते वृषभो हृष्टः। अनुत्कर्षे अपकृष्यते। दोषे अपभाषते। दूषणे अपवदति। ईप्सायाम् अपेक्षते। ह्रासे अपचीयते। उत्प्रासे अपहसति। आविष्कारे अपावृणोति। वारणे अपकरोति। न्यक्करणे अपाक्षिपति। निह्नवे अपजानीते। अन्यथात्वे व्यपवर्तते। द्रोहे अपरुन्ध्य(ति? ते)। दुरभिसन्धौ अपध्यायति। व्याधौ अपस्मरति। व्यावृत्तौ अपोहते। मुक्तौ अपवृज्यते। प्रतिदाने अपमयते। स्तेये ................ ॥

संशब्दः सम्यक्त्वसङ्ग्रहसहभावसमन्ताद्भावसम्भवसम्बन्धसन्निधिसमृद्धिक्रोधकूजनाजिसम्भ्रमसंहननवाचिकविरचनाविमोहमोहनसंस्कारानुकारसङ्करसंवरणसंस्मृतिप्रतिज्ञासंज्ञपनपरिचयपरिचरणविगणनविमर्शोद्योगत्यागनियमनक्रियापवर्गादिषु। तत्र सम्यक्त्वे सम्प्रेक्षते। सङ्ग्रहे समाहरति। सहभावे सम्प्रव(द)न्ते। समन्ताद्भावे सम्पतति। सम्भवे सम्भवति। सम्बन्धे संयुज्यते। सन्निधौ सन्निकृष्यते। समृद्धौ सम्पद्यते। क्रोधे संरभते। कूजने सङ्क्रीडन्ति शकटानि। आजौ सङ्ग्रामयते। सम्भ्रमे सन्त्वरते। संहनने सन्दधाति। वाचिके सन्दिशति। विरचनायां सन्निविशते। विमोहे संशेते। मोहने संभुङ्क्ते। संस्कारे संस्कुरुते। अनुकारे सङ्काशते। सङ्करे सम्भिद्यते। संवरणे संव्रियते। संस्मृतौ सङ्कल्पते। प्रतिज्ञायां सङ्गिरते। संज्ञपने संहरति। परिचये संस्तौति। परिचरणे संसेवते। विगणने सङ्ख्याति। विमर्शे संपृच्छते। उद्योगे संयतते। त्यागे सन्न्यस्यति। नियमने संयच्छते। क्रियापवर्गे समापयतीति॥

अनुशब्दः सहपश्चादर्थदयानुमतिज्ञानसान्त्वनसेवासादृश्याचरणालोचनप्रश्नमार्गणानुकूल्यानुपूर्व्यासक्तिसातत्येच्छोपकारप्रोत्साहनपश्चात्तापप्र-

साधनवासनान्वयनिदेशादिषु । तत्र सहार्थे अनुचरति । पश्चादर्थे अनुसरति । दयायाम् अनुकम्पते । अनुमतौ अनुमोदते । ज्ञाने अनुभवति । सान्त्वने अनुनयति । सेवायाम् अनुजीवति । सादृश्ये अनुकरोति । आचरणे अनुतिष्ठति । आलोचने अन्वीक्षते । प्रश्ने अनुयुङ्क्ते । मार्गणे अन्वेषयति । आनुकूल्ये अनुवर्तते । आनुपूर्व्ये अनुक्रामति । आसक्तौ अनुरज्यते । सातत्ये अनुबध्नाति । इच्छायाम् अनुरुध्यते । उपकारे अनुगृह्णाति । प्रोत्साहने होत्रे अनुगृणाति । पश्चात्तापे अनुशेते । प्रसाधने अनुलिम्पति । वासनायाम् अनुरुध्यते । अन्वये अनुषज्यते । निदेशे अनुशास्तीति ॥

अवशब्दोऽवबोधोद्बोधक्रोधसंरोधावष्टम्भवेष्टनालम्बनालङ्कारनिगरणन्यग्भावभोजनादानावज्ञा(नाज्ञाप)नाधोयानश्रद्धानक्लृप्तदक्षताप्रणिधानप्रतिविधानधर्षणावध्वंसनावसादनोपश्लेषसेवाप्रस्तावप्रहासहासप्रसारणसंहरणावदानदर्शनादिषु । तत्रावबोधे अवगच्छति । उद्बोधे अवचष्टे* । संरोधे अवरुणद्धि । अवष्टम्भे अवष्टम्भते । वेष्टने अवनह्यते । आलम्बने अवष्टभ्नाति । अलङ्कारे अवतंसयति । निगरणे अवगिरते । न्यग्भावे अवाञ्चति । भोजने अवष्वणति । आदाने अवचिनोति । अवज्ञाने अवमन्यते । आज्ञापने अवसृजति । अधोयाने अवरोहति । श्रद्धाने अवकल्पते । क्लृप्ते अवक्रीणीते । दक्षतायाम् अवलिम्पति । प्रणिधाने अवधत्ते । प्रतिविधाने अवेक्षते । धर्षणे अवस्कन्दति । अवध्वंसने अवचूर्णयति । अवसादने अवहन्ति । उपश्लेषे अवगूहति । सेवायाम् अवसज्यते । प्रस्तावे अवसरति । प्रहासे अवहेलयति । हासे अवसीदति । प्रसारणे अवतनोति । संहरणे अवगारो बलानाम् । अवदाने स्रुवेणावद्यति । दर्शने अवलोकते इति ॥

निरशब्दो निश्चयाधिश्रयणशक्त्युत्पत्तिनिर्गमाविष्करणपृथक्करणबहिष्करणान्वाख्यानप्रत्याख्यानेषदर्थभृशार्थशिथिलतानिरसननिघ्नत्वप्रयत्नपीडाप्रतिक्रियाग्रहखेदकार्त्स्न्योपभोगशान्तिसुखावाप्त्यादिषु । तत्र निश्चये निर्णयति । अधिश्रयणे सौर्यं चरुं निर्वपति । शक्तौ निर्वहति । उत्पत्तौ निष्पद्यते । निर्गमे निर्याति । आविष्करणे निर्धारयति† । बहिष्करणे निर्हरति । अन्वाख्याने निर्दिशति । प्रत्याख्याने निरस्यति । ईषदर्थे निष्टपति । भृशार्थे

* इतः परं क्रोधे उदाहरणं देयम् । † इतः परं पृथक्करणे उदाहरणं देयम्

निष्पचति। शिथिलतायां निष्कषति। निरसने निष्ठीवति। निम्नत्वे निस्सहते। प्रयत्ने निरीक्षते। पीडायां निस्तनति। प्रतिक्रियायां निष्क्रीणाति। आग्रहे निर्बध्नाति। खेदे निर्विद्यते। कार्त्स्न्ये निर्मूलयति। उपभोगे निर्विशति। शान्तौ प्रदीपो निर्वाति। सुखावासौ निर्वृणोतीति॥

दुर्शब्दः ................................................................................

................................................................................

................................................................................

................................................................................

........................................................................ दुःखेन क्रियते दुष्करः दुष्पानः। निर् दुर्ग्रहणात् निस्दुस् इत्येतावपि तन्त्रेण गृह्येते। तेन निरयणं दुरयणमिति रुत्वस्यासिद्धत्वाद् 'उपसर्गस्यायतौ' इति लत्वं न भवति। निष्टपतीति 'निसस्तपतावनासेवायाम्' इति षत्वं भवति॥

विशब्दो (विशेष)विरोधव्याप्तिविनिमयात्ययव्यत्यासव्यतिकरव्यतिहारविस्तारोपरमव्याजभोजनासञ्जनार्थवैपरीत्यप्रत्ययपर्यायपरावृत्तिप्रतिबन्धप्रकाशनप्रैषान्वेषणप्रसारणमीमांसोहविमोह(विमति)वैरवण्टनचेष्टावैदग्ध्यक्रीडाक्रियाकालहरणपरिणयपरिणामपरिखेदनिद्रोच्छेददूरोद्योगायोगनिशामनाश्चर्यशौर्यशिक्षाविशब्द(न)विनाशनानात्वान्यथात्वरचनादानदर्शनादिषु। तत्र विशेषे विराजते। विरोधे विप्रतिपद्यते। व्याप्तौ विभवति। विनिमये विक्रीणीते। अत्यये विवासयति। व्यत्यासे विक्षिपति। व्यतिकरे व्यतिषजति। व्यतिहारे व्यतिलुनीते। विस्तारे वितनुते। उपरमे विश्राम्यति। व्याजे व्यपदिशति। भोजने विष्वणति। आसञ्जने विलगति। अर्थवैपरीत्ये विरज्यते। प्रत्यये विश्वसिति। पर्याये विशेते। परावृत्तौ व्यावर्तते। प्रतिबन्धे विष्टम्भते। प्रकाशने विवृणोति। प्रैषे व्यादिशति। अन्वेषणे वीक्षते। प्रसारणे व्याददाति। मीमांसायां विचारयते। ऊहे वितर्कयति। (वि)मोहे विभ्राम्यति। विमतौ विवदन्ते। वैरे विरुणद्धि। वण्टने विभजते। चेष्टायां व्याप्रियते। वैदग्ध्ये व्युत्पद्यते। क्रीडायां विहरति। क्रियायां विदधाति। कालहरणे विलम्बते। परिणये विवहति। परिणामे विवर्तते। परिखेदे विषीदति। निद्रोच्छेदे विबुध्यते। दूरे विप्रकृष्यते।

उद्योगे व्यवस्यति । अयोगे व्यतिरिच्यते । निशामने विज्ञापयति । आश्चर्ये विस्मयते । शौर्ये विक्रामति । शिक्षायां विनयते । विशब्दने व्याहरति । विनाशे विपद्यते । नानात्वे विकल्पते । अन्यथात्वे व्यभिचरति । रचनायां विरचयति । दाने वितरति । दर्शने विलोकयतीति ॥

आङ्शब्द आभिमुख्यालेख्याक्रमणकरणग्रहणधर्षणाश्लेषणशापपवनवाञ्छानिषेधस्पर्धानमनबन्धवधादिविधिविस्रम्भारम्भसम्भ्रमाभ्यवहारस्नानसंस्थानसम्प्रदायदर्शनविमर्शविज्ञानाज्ञापनपारतन्त्र्यत्यागवृत्त्यावृत्तिप्राप्तिप्रतिश्रवविस्तारावरणाह्वानाध्यानस्थानोपस्थानातङ्कश्रमोपरमवचनसञ्चयनियोगनैकट्योत्कण्ठाकालहरणावष्टम्भसम्भाषणभूषणादिषु । तत्राभिमुख्ये आगच्छति । आलेख्ये चित्रमालिखति । आक्रमणे आक्रमन्ते ज्योतींषि । करणे आवहति । ग्रहणे आदत्ते । धर्षणे आस्कन्दति । आश्लेषणे आलिङ्गति । शापे आक्रोशति । पवने आधत्ते । वाञ्छायाम् आशास्ते । निषेधे आक्षिपति । स्पर्धायाम् आह्वयते । आनमने आवर्जयति* । वधे आलभते । आदिविधौ आक्रियते । विस्रम्भे आश्वसिति । आरम्भे आरभते । सम्भ्रमे आगृह्णाति । अभ्यवहारे आस्वादयति । स्नाने आप्लवते । संस्थाने आक्रियते । सम्प्रदाये आमनति । दर्शने आलोकते । विमर्शे आलोचयति । विज्ञाने आभासते । आज्ञापने आदिशति । पारतन्त्र्ये आयतते । त्यागे आपृच्छते । वृत्तौ आजीवति । आवृत्तौ आम्रेडयति । प्राप्तौ आपद्यते । प्रतिश्रवे आशृणोति । विस्तारे आयच्छते । आवरणे आस्तृणीते । आह्वाने आकारयति । आध्याने आनह्यति । स्थाने आश्रयति । उपस्थाने आराधयति । आतङ्के आशङ्कते । श्रमे आयस्यति । उपरमे आरमति । वचने आचष्टे । सञ्चये गोमयान्याचिनोति । नियोगे आयुज्यते । नैकट्ये आसीदति । उत्कण्ठायाम् आनुते सृगालः । कालहरणे आगमयस्व तावत् । अवष्टम्भे आलम्बते । सम्भाषणे आभाषते । भूषणे आकल्पयतीति ॥

निशब्दो न्यग्भावन्यासस्समाप्तिस्वापस्वभावपरिभवव्यावृत्त्यवस्थानकथननियोगनिगमनाधाननिशामनसंयमनतेजनोदाहरणवारणकारणोपवेशनराशीकरणदर्शननिमाननैपुणग्रसनहिंसापनयनपितृक्रियाक्षिकर्मपरीक्षारतोत्सवापवादसादृश्यादिषु । तत्र न्यग्भावे निह्नूयते । न्यासे निक्षिपति । समाप्तौ

---

* इतः परं बन्धे उदाहरणं देयम् ।

नितिष्ठति । स्वापे निद्राति । स्वभावे निसृजति । परिभवे निगृह्णीते । व्यावृत्तौ निवर्तते । अवस्थाने निवसति । कथने निवेदयति । नियोगे निमन्त्रयति । निगमने निगच्छति । आधाने निषिञ्चति । निशामने निशाम्यति । संयमने नियच्छति । तेजने निशातयति । उदाहरणे निदर्शयति । वारणे निषेधयति । कारणे निदत्ते । उपवेशने निषीदति । राशीकरणे निचिनोति । दर्शने निध्यायति । निमाने निमिमीते । नैपुणे निष्णाति । ग्रसने निगिरति । हिंसायां निहन्ति । अपनयने निकृन्तति । पितृक्रियायां निवपति । अक्षिकर्मणि निमीलति । परीक्षायां निरूपयति । रतोत्सवे निचुम्बति । अपवादे निदिशति । सादृश्ये निकाशते इति ॥

अधिशब्द आधिक्याधिपत्योपरिभावप्रस्तावसहाभिधानोर्ध्वयानज्ञानावस्थानप्रेरणारोपणाङ्गीकारात्याकारसपत्नीलाभपाकारम्भप्रसहनबुभुत्सादिषु । तत्राधिक्ये अध्याहरति । आधिपत्ये अधितिष्ठति । उपरिभावे अधिशेते । प्रस्तावे अधिक्रियते । सहाभिधाने अधीते । ऊर्ध्वयाने अधिरोहति । ज्ञाने अधिगच्छति । अवस्थाने अधिवसति । प्रेरणे अध्येषयति । आरोपणे अध्यस्यति । अङ्गीकारे अधिकरोति । अत्याकारे अधिक्षिपति । सपत्नीलाभे अधिविन्दति । पाकारम्भे अधिश्रयति । प्रसहने अधिकुरुते । बुभुत्सायाम् अध्यवस्यतीति ॥

प्रतिशब्दः पादप्राप्तितुष्टिसेवानिवारणव्यलीकाविष्करणकालहरणनिष्क्रयनिष्कर्षज्ञानानुसन्धानानुमत्यभिमतिप्रोत्साहनाविनाभावसङ्गराङ्गीकारविनिमयव्यावृत्तिपुनरावृत्तिवैपरीत्यविघ्नविनिद्रत्वावेक्षणप्रक्षेपसङ्क्षेपस्पर्धासादृश्यसंश्रवाभ्यवहारोत्तरादानयत्नादिषु । तत्र पादप्राप्तौ प्रतितिष्ठति । तुष्टौ प्रतिनन्दति । सेवायां प्रतिश्रयति । निवारणे प्रतिषेधति । व्यलीकाविष्करणे प्रत्युपालभते । कालहरणे प्रतीक्षते । निष्क्रये प्रत्युपकुरुते । (निष्कर्षे) प्रति(कृत्य ? )कुत्सयति । ज्ञाने प्रतिपद्यते । अनुसन्धाने प्रत्यभिजानाति । अनुमतौ प्रत्येति । अभिमतौ प्रतिभाति । प्रोत्साहने होत्रे प्रतिगृणाति । अविनाभावे प्रतिबध्नाति । सङ्गरे प्रतिजानीते । अङ्गीकारे प्रतिगृह्णाति । विनिमये प्रतिददाति । व्यावृत्तौ प्रत्यागच्छति । पुनरावृत्तौ प्रत्युज्जीवति । वैपरीत्ये प्रत्यवतिष्ठते । विघ्ने प्रत्यूहते । विनिद्रत्वे प्रतिबुध्यते । अवेक्षणे प्रतिसन्धत्ते । प्रक्षेपे प्रतिवपति । संक्षेपे प्रत्याहरति । स्पर्धायां प्रतिगच्छति । सादृश्ये प्रतिनिधत्ते । संश्रवे प्रतिशृणोति । अभ्यवहारे प्रत्यवस्यति । उत्तरे प्रतिब्रूते । आदाने प्रतिगृह्णाति । यत्ने प्रतिविधत्ते इति ॥

परिशब्दः परितोभावव्यवस्थाविवाहविनिमयवि(नि ?)वर्त्तवर्जनन्यक्कारनिन्दानर्मनिवसनविज्ञानपरिज्ञानालिङ्गनानुशोचननिर्गमापवर्तनविस्तारवेष्टनाकोटनक्रमान्धोदानसम्प्रदानस्पर्शक्षियावशेषणभूषणसेवास्वीकारसंन्याससामर्थ्यसाङ्गत्यलाघवादिषु । तत्र परितोभावे परिभ्राम्यति । व्यवस्थायां परिभाषते । विवाहे परिणयति । विनिमये परिवर्तते । विवर्ते परिणमते । वर्जने परिहरति । न्यक्कारे परिभवति । निन्दायां परिवदति । नर्मणि परिहसति । निवसने परिधत्ते । विज्ञाने परिच्छिनत्ति । परिज्ञाने परीक्षते । आलिङ्गने परिरभते । अनुशोचने परिदेवयति । निर्गमे परिवहति । अपवर्तने पर्यस्यति । विस्तारे परिणह्यति । वेष्टने परिवृणोति । आकोटने परिवासयति । क्रमे परिपटति । अन्धोदाने परिवेवेष्टि । सम्प्रदाने पर्युक्षति । स्पर्शे परिस्पृशति । क्षियायां परिविन्दति । अवशेषणे परिशिनष्टि । भूषणे परिष्करोति । सेवायां परिचरति । स्वीकारे परिगृह्णाति । सन्न्यासे परिव्रजति । सामर्थ्ये पर्याप्नोति । साङ्गत्ये परिचिनोति । लाघवे परिप्लवते इति ॥

उपशब्दः सामीप्यसात्म्यानुकूल्यसेवारम्भाराधनोपस्थानोपप्रदानप्रजनसामर्थ्यप्रार्थनप्रस्तावनावज्ञाविज्ञानालिङ्गनाङ्गीकारोपालिङ्गवचनाचमनचिह्नभोजनाभोजनोपभोगभेदनासनौदासीन्यदाक्षिण्यक्षैण्यशिक्षासादृश्यानुग्रहग्रहणगर्हणालङ्कारापकारकर्मधारणवृद्धिबलिबन्धनोपधानौद्धत्ययत्नयज्ञकर्माचार्यक्रपर्यायुक्तिसान्त्वनसन्तपनच्छायोपच्छन्दनविनाशव्यावृत्त्याजीवविवाहादिषु । तत्र सामीप्ये उपसर्पति । सात्म्ये कस्य न क्षीरमुपशेते । आनुकूल्ये उपसीदति । सेवायाम् उपास्ते । आरम्भे उपक्रमते । आराधने सावित्र्या सूर्यमुपतिष्ठते । उपस्थाने महामन्त्रानुपतिष्ठते । उपप्रदाने उपचरति । प्रजने उपसर्या गौः । सामर्थ्ये उपकल्पते । प्रार्थने उपयाचते । प्रस्तावनायाम् उपक्षिपति । अवज्ञायाम् उपहसति । विज्ञाने उपलभते । आलिङ्गने उपगूहति । अङ्गीकारे उपगच्छति । उपालिङ्गे उपसृजति । वचने उपन्यस्यति । आचमने उपस्पृशति । चिह्ने उपलक्षयति । भोजने उपयुङ्क्ते । अभोजने उपवसति । उपभोगे उपभुङ्क्ते । भेदने उपजपति । आसने उपविशति । औदासीन्ये उपेक्षते । दाक्षिण्ये उपरुध्यते । क्षैण्ये उपक्षीयते । शिक्षायाम् उपदिशति । सादृश्ये उपमिमीते । अनुग्रहे उपकरोति । ग्रहणे उपादत्ते । गर्हणे उपालभते । अलङ्कारे कन्यामुपस्करोति । अपकारे

उपद्रवति । (कर्म)धारणे उपवहति । वृद्धौ उपचिनोति । बलौ उपहरति । बन्धने उपनह्यति । उपधाने उपदधाति । औद्धत्ये उपप्लवते । यत्ने एधोदकस्योपस्कुरुते । यज्ञकर्मणि उपकरोति । आचार्यके माणवकमुपनयते । पर्याये अद्यायमुपशेते । युक्तौ उपपद्यते । सान्त्वने कर्मकरानुपवदते । सन्तपने उपतपति । छायायाम् उपरज्यति । उपच्छन्दने परदारानुपवदते । विनाशे उपरमते । व्यावृत्तौ उपावर्त्तते । आजीवे उपजीवति । विवाहे कन्यामुपयच्छते इति ॥

अतिशब्दोऽतिक्रमातिवृत्त्यतिदेशातिशयदुर्नयाधिक्षेपाधिक्ययापनारोपणापहसनानुज्ञानुबन्धनिर्बन्धोपधिव्याधिविनाशभृशार्थानर्थशङ्कादिषु । तत्रातिक्रमे अतिवर्तते । अतिवृत्तौ अतिपतति । अतिदेशे प्रकृतिधर्मान् विकृतावतिदिशति । अतिशये अतिव्याप्नोति । दुर्नये अतिवरति । अधिक्षेपे अत्याकरोति । आधिक्ये अतिरिच्यते । यापने अतिवाहयति । आरोपणे काष्ठमुत्थानेऽत्यादधाति । अपहसने अतिहसति । अनुज्ञायाम् अतिसृजति । अनुबन्धे अतिगृह्णाति । निर्बन्धे अतिपृच्छति । उपधौ अतिसान्त्वयते । व्याधौ अतिसरति । विनाशे अत्येति । भृशार्थे अतिरज्यते । अनर्थशङ्कायाम् अपि नात्याहितं तत्रभवत इति ॥

अपिशब्दोऽपिधानबन्धनापिग्रहोपगमनेष्वेव । तत्रापिधाने अपिधत्ते । बन्धने अपिनह्यति । अपिग्रहे तस्मादपिगृह्यम् । उपगमने अथेतरे दुःखमेवापियन्तीति । पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु चैष कर्मप्रवचनीयः । प्रश्नबाधार्थादिषु तु निपातः ॥

सुशब्दोऽकृच्छ्रार्थसौष्ठवयोरेव । अकृच्छ्रार्थे सुकरम् । सौष्ठवे सुमनस्वी भवति सुमनायते । सु स्तुतं भवतीति पूजायां कर्मप्रवचनीयः । सुतरां सुमहान् सुरूप इत्यतिशयसमृद्धिसम्पत्त्यादिषु निपातः ॥

उच्छब्दोऽभ्युदयोत्पत्त्युत्पवनमानमर्दनजीवनोदानोद्यानोद्योगत्यागारोग्योर्ध्वचेष्टाविभूषणोत्क्षेपणावेक्षणविमोहवारणविमर्शपैशुनविनाशतापनोपदोपयमनप्रकथननिर्वेदनिगमनविकाशबन्धनोद्धरणविलेखनवृद्धिमाध्यस्थ्यप्रशंसाभासहिंसाविपर्यासौत्सुक्यार्थवैपरीत्यादिषु । तत्राभ्युदये उदयति । उत्पत्तौ उद्भवति । उत्पवने उत्पुनीते । माने उन्मिमीते । मर्दने उद्वर्तयति । जीवने उज्जीवयति । उदाने उच्छ्वसिति । उद्याने उत्पतति ।

उद्योगे उत्सहते । त्यागे उत्सृजति । आरोग्ये उल्लाघयति । ऊर्ध्वचेष्टायाम् आसनादुत्तिष्ठति । विभूषणे उत्तंसयते । उत्क्षेपणे उदस्यति । अवेक्षणे उत्पश्यति । विमोहे उद्भ्राम्यति । वारणे उत्सारयति । विमर्शे उत्प्रेक्षते । पैशुने उत्कुरुते । विनाशे उच्छिद्यते । तापने उत्तपति । उपदायाम् उत्कोचयति । उपयमने उद्वहति । प्रकथने उदीरयति । निर्वेदे उद्विजते । निगरने उच्चरति । विकाशे उद्बुध्यते । बन्धने उद्बध्नाति । उद्धरणे उद्धरति । विलेखने उल्लिखति । वृद्धौ उच्छ्रयते । माध्यस्थ्ये उदास्ते । प्रशंसायाम् उत्क्रुष्यते । आभासे उद्भासते । हिंसायाम् उज्जासयति । विपर्यासे उद्वेल्लति । औत्सुक्ये उत्कण्ठते । अर्थवैपरीत्ये उत्तमति (?) ॥

अभिशब्दोऽभियोगाभिमुख्याभिविध्याग्रहस्मरणधर्षणानुकाराङ्गीकारन्यक्कारसंस्कारकामनामानोज्ञकप्रियोपगमनाभ्यञ्जनस्नानभोजनक्रियारम्भप्रशंसाहिंसासन्तापाक्षमाप्रक्षेपणाभीक्ष्ण्याभिमतितुष्ट्यभिहतिवचनयाच्ञावितर्कातङ्कवन्दनाभ्युदयादिषु । तत्राभियोगे अभिषेणयति । आभिमुख्ये अभिगच्छति । अभिविधौ अभिव्याप्नोति । आग्रहे अभिनिविशते । स्मरणे अभिजानाति । धर्षणे अभिद्रवति । अनुकारे अभिनयति । अङ्गीकारे अभ्युपगच्छति । न्यक्कारे अभिभवति । संस्कारे अभिषिञ्चति । कामनायाम् अभिवाञ्छति । मानोज्ञके अभिरमयति । प्रियोपगमने अभिसरति । अभ्यञ्जने अभ्यनक्ति । स्नाने अभिषुणोति । भोजने अभ्यवहरति । क्रियायाम् अभ्यावहति । आरम्भे अभ्याददाति । प्रशंसायाम् अभिनन्दति । हिंसायाम् अभिचरति । सन्तापे अभिषजति । अक्षमायाम् अभ्यसूयति । प्रक्षेपणे अग्नौ समिधमभ्याददाति । आभीक्ष्ण्ये अभ्यावर्तते । अभिमतौ अभिप्रैति । तुष्टौ अभिमनायते । अभिहतौ अभिताडयति । वचने अभिधत्ते । याच्ञायाम् अभ्यर्थयते । वितर्के अभ्यूहति । आतङ्के अभिशङ्कते । वन्दनायाम् अभिवादयते । अभ्युदये अभिवर्धयते इति ॥

सर्वत्रादिग्रहणात् प्राद्यो यथादर्शनमन्येष्वप्यर्थेषु यथायोगं भवन्ति । गम्यमानयापि च क्रिययैषां योगो भवति । तद्यथा—प्रगतः आचार्यः प्राचार्यः, अतिक्रान्तः खट्वामतिखट्वः, अवक्रुष्टं कोकिलया अवकोकिलमित्यादौ विना समासगम्याः क्रिया भवन्ति । आक्षिप्ताभिरपि क्रियाभिः क्वचिदमी सम्बध्यन्ते । तद्यथा—प्रादेशं विमाय परिलिखति प्रादेशं विपरिलिखति ।

"येन क्रियापदाक्षेपः स कारकविभक्तिभिः ।
युज्यते वियथा तस्य लिखावनुपसर्गतः ॥"

सकृदुपात्तमपि च क्रियापदमुपसर्गावृत्त्या क्वचिदावर्तते । तद्यथा--संवर्चसा पयसा सन्तनूभिरगन्महि मनसा संशितेनेति ॥

श्रद् दधातौ ॥ १२९ ॥

श्रच्छब्दो दधातिक्रियायोगे उपसर्गसंज्ञो भवति । श्रद्धा । श्रद्दधाति । उपसर्गत्वाद् 'आतश्चोपसर्गे' इत्यङ् भवति ॥

अन्तर्णत्वाङ्किविधिषु ॥ १३० ॥

अन्तरित्ययं णत्वविधौ अङ्विधौ किविधौ च क्रियायोगे उपसर्गसंज्ञो भवति । अन्तर्णयति । अन्तर्धा । अन्तर्धिः ॥

गतयश्च ॥ १३१ ॥

प्रादयो विंशतिरुपसर्गा गतिसंज्ञा भवन्ति । प्रकृत्य । प्रहृत्य । प्रहृतम् । यत् प्रकरोति । गतित्वात् 'गतयश्च' इति समासः । 'गतिर(न)न्तरः' इति प्रकृतिस्वरः, 'तिङ्युदात्तवति' इति गतिनिघातश्च भवति । चकार उपसर्गसंज्ञासमावेशार्थः । तेन प्रणीतम् अभिषिक्तमित्यादौ गतित्वात् प्रकृतिस्वरः, उपसर्गत्वाण्णत्वं षत्वं च भवति । योगविभाग उत्तरत्र गतिसंज्ञामात्रस्यैवानुवृत्त्यर्थः ॥

कारिकाच्विडाचश्च ॥ १३२ ॥

कारिकाशब्दः क्रियावचनः च्विडाच्प्रत्ययान्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति । कारिकाकृत्य । कारिकाकृतम् । यत् कारिकाकरोति । शुक्लीकृत्य । शुक्लीकृतम् । यच्छुक्लीकरोति । पटपटाकृत्य । पटपटाकृतम् । यत् पटपटाकरोति । च्विडाचोः कृभ्वस्तियोगे विधानादिह क्रियायोगः कृभ्वस्तिविषय एव गृह्यते । एवमुत्तरत्रापि । च्विडाच्प्रत्ययमात्रस्य क्रियायोगाभावात् संज्ञाविधावपि तदन्तविधिर्भवति ॥

ऊर्युररीयुररी चाङ्गीकारे ॥ १३३ ॥

ऊरी उररी उररी चेत्येते गतिसंज्ञा भवन्ति । अङ्गीकारार्थत्वाच्च कृञैव

युज्यन्ते । ऊरीकृत्य । उररीकृत्य । उरुरीकृत्य । स्वरार्थतापि पूर्ववत् प्रदर्शनीया ॥

पाम्पी धूसी ताल्याताली वेताली च विस्तारे ॥ १३४ ॥

पाम्प्यादयो गतिसंज्ञा भवन्ति । विस्तारार्थत्वाच्च कृभ्वस्तिभिस्त्रिभिरपि युज्यन्ते । पाम्पीकृत्य । धूसीकृत्य । तालीकृत्य । आतालीकृत्य । वेतालीकृत्य । एवं पाम्पीभूय । पाम्पीस्यादिति ॥

वार्दाली सेवाली केवाली कौपास्यालोष्टी सकला श्रंसकला ध्वंसकला भ्रंसकला मस्मसा मसमसा च हिंसायाम् ॥ १३५ ॥

वार्दाल्यादयो गतिसंज्ञा भवन्ति । हिंसार्थत्वात् प्रायः करोतिनैव युज्यन्ते । वार्दालीकृत्य । सेवालीकृत्य । केवालीकृत्य । कौपासीकृत्य । आलोष्टीकृत्य । सकलाकृत्य । श्रंसकलाकृत्य । ध्वंसकलाकृत्य । भ्रंसकलाकृत्य । मस्मसाकृत्य । मसमसाकृत्य । अकर्मकेणापि हिंसनार्थनिर्देशाद् भ्वस्तिभ्यामपि क्वचिद् योगः । सकलाभूय । सकलास्यादिति ॥

गुलुगुधा पीडायाम् ॥ १३६ ॥

गुलुगुधाशब्दो गतिसंज्ञो भवति । पीडार्थत्वात् कृञैव युज्यते । गुलुगुधाकृत्य ॥

आक्ली विक्ली फली फलू विकारे ॥ १३७ ॥

आक्ल्यादयः शब्दा गतिसंज्ञा भवन्ति । विकारार्थत्वात् कृभ्वस्तिभिस्त्रिभिरपि युज्यन्ते । आक्लीकृत्य । विक्लीकृत्य । फलीकृत्य । फलूकृत्य । एवमाक्लीभूय । आक्लीस्यादित्यादि ॥

सजूः सहार्थे ॥ १३८ ॥

सजूश्शब्दः क्रियायोगे गतिसंज्ञो भवति । सहार्थत्वात् कृभ्वस्तिभिस्त्रिभिरपि युज्यते । सजूःकृत्य । सजूर्भूय । सजूःस्यात् ॥

वषड् वौषट् श्रौषट् स्वाहा स्वधा सम्प्रदाने ॥ १३९ ॥

वषडादयः शब्दा गतिसंज्ञा भवन्ति । सम्प्रदानार्थत्वात् करोतिनैव युज्यन्ते । वषट्कृत्य । वौषट्कृत्य । श्रौषट्कृत्य । स्वाहाकृत्य । स्वधाकृत्य । अक्रियायोगेऽप्येषां चादिपाठाद् निपातसंज्ञा ॥

प्रादुराविषी प्राकाश्ये ॥ १४० ॥

प्रादुराविश्शब्दौ क्रियायोगे गतिसंज्ञौ भवतः । प्राकाश्यार्थत्वात् कृभ्वस्तिभिर्युज्येते । प्रादुष्कृत्य । प्रादुर्भूय । प्रादुष्ष्यात् । आविष्कृत्य । आविर्भूय । आविस्स्यात् ॥

अनुकरणं चानितिपरम् ॥ १४१ ॥

इतिः परो यस्मात् तदितिपरम् । ततोऽन्यदनुकरणं क्रियायोगे गतिसंज्ञं भवति । खाट्कृत्य । खाट्कृतम् । यत् खाट्करोति । अनितिपरमिति किम् । खाडिति कृत्वा निरष्ठीवत् ॥

आदरानादरयोः सदसती ॥ १४२ ॥

आदरानादरयोर्गम्यमानयोर्यथासङ्ख्यं सदसच्छब्दौ क्रियायोगे गतिसंज्ञौ भवतः । सत्कृत्य । असत्कृत्य । आदरानादरयोरिति किम् । सत् कृत्वा काण्डं गतः । असत् कृत्वा गतः ॥

भूषणेऽलम् ॥ १४३ ॥

अलंशब्दो भूषणार्थः क्रियायोगे गतिसंज्ञो भवति । अलङ्कृत्य कन्यां ददाति । भूषण इति किम् । अलं कृत्वा । न कर्तव्यमित्यर्थः ॥

अन्तरपरिग्रहे ॥ १४४ ॥

कृभ्वस्तिभिरिति न सम्बध्यते । अन्तर्शब्दः क्रियायोगे गतिसंज्ञो भवति, न चेत् परिग्रहे स्वीकारे वर्तते । अन्तःकृत्य । अन्तर्धाय । अपरिग्रह इति किम् । अन्तर्हत्वा मूषिकां श्येनो गतः । परिगृह्य गत इत्यर्थः ॥

कणेमनसी श्रद्धाप्रतिघाते ॥ १४५ ॥

अभिलाषव्यावृत्तौ गम्यमानायां कणेमनश्शब्दौ क्रियायोगे गतिसंज्ञौ भवतः । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत् पिबति,

यावदभिलाषो व्यावर्तत इत्यर्थः। श्रद्धाप्रतिघात इति किम्। तण्डुलस्य कणे हत्वा, मनो हत्वा गतः॥

पुरोऽस्तमव्यये ॥ १४६ ॥

पुरस्शब्दोऽस्तंशब्दश्चाव्यये क्रियायोगे गतिसंज्ञौ भवतः। पुरस्कृत्य। पुरस्कृतम्। गतित्वात् समासस्वरः सकारश्च भवति। अस्तंगत्य सविता पुनरुदेति। अव्यये इति किम्। तिस्रः पुरः करोति। अस्तं कृत्वा काण्डं गतः। क्षिप्तमित्यर्थः॥

अच्छ गत्यर्थवदिभिः ॥ १४७ ॥

अच्छशब्दोऽव्ययमभिशब्दार्थे वर्तते। स गत्यर्थैर्वदिना च योगे गतिसंज्ञो भवति। अच्छगत्य। अच्छोद्य। अव्ययमित्येव। उदकमच्छं गच्छति॥

अदोऽनुपदेशे ॥ १४८ ॥

उपदेशः परस्य कथनम्। ततोऽन्यत्रादश्शब्दः क्रियायोगे गतिसंज्ञो भवति। अदःकृत्य तत् करिष्यामीति चिन्तयति। अनुपदेश इति किम्। अदः कृत्वा गच्छ॥

तिरोऽन्तर्धौ ॥ १४९ ॥

अन्तर्धौ व्यवधाने वर्तमानस्तिरश्शब्दः क्रियायोगे गतिसंज्ञो भवति। तिरोभूय। तिरोधाय। अन्तर्धाविति किम्। तिरो भूत्वा स्थितः॥

कृञो वा ॥ १५० ॥

तिरस्शब्दोऽन्तर्धौ वर्तमानः करोतिना योगे वा गतिसंज्ञो भवति। तिरस्कृत्य। तिरस्कृत्वा॥

उपाजेऽन्वाजे सामर्थ्याधाने ॥ १५१ ॥

उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्तमानौ करोतिना योगे वा गतिसंज्ञौ भवतः। उपाजेकृत्य उपाजे कृत्वा। अन्वाजेकृत्य अन्वाजे कृत्वा। सामर्थ्याधान इति किम्। अजस्य समीपमुपाजम्। उपाजे कृत्वा॥

साक्षान्मिथ्याचिन्ताभद्रारोचनामास्थान्धाप्राजर्याप्राजरुहा(बीजरुहा)संसर्याश्च्व्यर्थे ॥ १५२ ॥

साक्षादादयोऽभूततद्भावविषयाः क्रियायोगे वा गतिसंज्ञा भवन्ति । असाक्षात् साक्षात् कृत्वा साक्षात्कृत्य । एवं मिथ्याकृत्य । चिन्ताकृत्य । भद्राकृत्य । रोचनाकृत्य । आमाकृत्य । आस्थाकृत्य । अन्धाकृत्य । प्राजर्याकृत्य । प्राजरुहाकृत्य । बीजरुहाकृत्य । संसर्याकृत्य । संज्ञाभावपक्षे साक्षात् कृत्वेत्यादि । च्व्यर्थ इति किम् । यः साक्षाद्भूतस्तमेव किञ्चित् करोति, तत्र साक्षात् कृत्वेत्येव । च्व्यन्तानां तु 'कारिकाच्विडाचश्च' इति नित्या गतिसंज्ञा ॥

अर्थेऽग्नौवशेविकम्पनेविहसनेप्रतपनेशीतंलवणमुष्णमुदकमार्द्रंप्रादुराविर्नमसश्च ॥ १५३ ॥

अर्थेप्रभृतयो निपाता अभूततद्भावविषयाः क्रियायोगे वा गतिसंज्ञा भवन्ति । निपातनादेषाम् एजन्तत्वममन्तत्वं च गतिसंज्ञासन्नियोगेन भवति । अर्थेकृत्य । अग्नौकृत्य । वशेकृत्य । विकम्पनेकृत्य । (विहसनेकृत्य । प्रतपनेकृत्य) । शीतंकृत्य । लवणंकृत्य । उष्णंकृत्य । उदकंकृत्य । आर्द्रंकृत्य । प्रादुष्कृत्य । आविष्कृत्य । नमस्कृत्य । गतिसंज्ञाभावपक्षे अर्थे कृत्वा शीतं कृत्वेत्यादि । तत्राधिकरणे सप्तमी, क्रियाविशेषणे च द्वितीया भवति । च्व्यर्थ इत्येव । यत्र लवणमेव किञ्चित् करोति, तत्र लवणं कृत्वेत्येव । च्व्यन्तानां तु पूर्वं नित्या गतिसंज्ञा लवणीकृत्य । प्रादुराविषोः पुनस्संज्ञाकरणं करोतौ विभाषार्थम् । च्व्यर्थ इत्येतच्चानयोरव्यभिचारान्नमसश्चासम्भवान्न सम्बध्यते ॥

अनत्याधान उरसि मनसि मध्ये पदे निवचने ॥ १५४ ॥

अत्याधानमुपश्लेषः, ततोऽन्यस्मिन् विषये उरसिप्रभृतयो वा गतिसंज्ञा भवन्ति । उरसिकृत्य । मनसिकृत्य । मध्येकृत्य । पदेकृत्य । निवचनेकृत्य । निवचनं वचनाभावः । वाचं नियम्येत्यर्थः । पक्षे उरसि कृत्वेत्यादि । अनत्याधान इति किम् । उरसि कृत्वा पाणिं शेते ॥

नित्यं हस्ते पाणावुपयमने ॥ १५५ ॥

उपयमने दारकर्मणि हस्तेपाणौशब्दौ सप्तमीप्रतिरूपौ कृञा योगे नित्यं गतिसंज्ञौ भवतः। हस्तेकृत्य। पाणौकृत्य। दारकर्म कृत्वेत्यर्थः। उपयमन इति किम्। हस्ते कृत्वा कार्षापणं गतः॥

प्राध्वं बन्धनानुकूल्ये ॥ १५६ ॥

प्राध्वमित्यव्ययं बन्धनानुकूल्ये वर्तमानं कृञा योगे नित्यं गतिसंज्ञं भवति। प्राध्वंकृत्य गतः। बन्धनेनानुकूलं कृत्वेत्यर्थः। बन्धनानुकूल्य इति किम्। प्रगतमध्वानं प्राध्वं शकटं कृत्वा गतः॥

जीविकोपनिषदावौपम्ये ॥ १५७ ॥

जीविकोपनिषच्छब्दावौपम्ये विषये कृञा योगे गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य। जीविकामिव उपनिषदमिव कृत्वेत्यर्थः। औपम्य इति किम्। जीविकां कृत्वा गतः। जीवनोपायं कृत्वेत्यर्थः॥

ते प्राग् धातोः ॥ १५८ ॥

ते उपसर्गा गतयश्च धातोः प्रागेव प्रयोक्तव्याः। तथैवोदाहृतम्। तेग्रहणमुपसर्गार्थम्, अनन्तरत्वाद् गतीनामेव प्रयोगनियमो मा भूत्। कर्तुं प्रकर्षेणेच्छति प्रचिकीर्षति। सुमनायते। सनादिभ्यः प्राक् प्रयोगो मा भूत्॥

कर्मप्रवचनीयाः ॥ १५९ ॥

'अधिरीश्वर' इति यावदितः प्रभृति येऽभिधास्यन्ते, ते कर्मप्रवचनीयसंज्ञा वेदितव्याः। कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः। कर्मशब्देन सा क्रियोच्यते, यया साम्प्रतमनुच्यमानयापि क्रियासम्बन्धोऽवच्छिद्यते। तथा हि—क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः। यथा—शाकल्यस्य संहितामनु प्रावर्षदिति। अत्र शाकल्यस्य संहिताप्रवर्षणयोर्हेतुहेतुमद्भावलक्षणः सम्बन्धो निशमयतिक्रियोपजनित इत्यनुना हेतुलक्षणविषयेण प्रकाश्यते। कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञे बाध्येते॥

अनुर्हेतुलक्षणे ॥ १६० ॥

हेतुभूते लक्षणे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञो भवति। अनड्वद्यज्ञमन्वसिञ्चत् प्रजाः पर्जन्यः। 'लक्षणेत्थम्भूत—' इत्यादिना हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यादिति वचनम्॥

सहार्थे ॥ १६१ ॥

सहार्थे अनुः कर्मप्रवचनीयसंज्ञो भवति । नदीमन्ववसिता सेना । नद्या सहावबद्धेत्यर्थः ॥

हीने ॥ १६२ ॥

हीनो न्यूनः । स चोत्कृष्टापेक्षः । हीनोत्कृष्टसम्बन्धे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञो भवति । अनु पाणिनिं वैयाकरणाः । पाणिनेर्हीना इत्यर्थः ॥

उपोऽधिके च ॥ १६३ ॥

उपशब्दो हीनोत्कृष्टसम्बन्धे अधिकाधिकिसम्बन्धे च कर्मप्रवचनीयसंज्ञो भवति । उपार्जुनं योद्धारः । उप खार्यां द्रोणः । 'सप्तम्याधिक्यस्वाम्ययोः' इति सप्तमी ॥

अपपरी वर्जने ॥ १६४ ॥

अपपरिशब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः । अप त्रिगर्ताद् वृष्टो देवः । 'पञ्चम्यपाङ्भ्यां', 'परिणा वर्जने' इति च पञ्चमी । वर्जन इति किम् । ओदनं परिषिञ्चति । कर्मप्रवचनीयत्वाभावादुपसर्गाश्रयं षत्वं भवति ॥

आङ् मर्यादाभिविध्योः ॥ १६५ ॥

आङ् मर्यादायामभिविधौ च द्योत्ये कर्मप्रवचनीयो भवति । आ पाटलिपुत्राद् वृष्टो देवः । पूर्ववत् पञ्चमी । आकुमारं यशः पाणिनेः । 'पर्यपाङ्—' इत्यादिनाव्ययीभावः । मर्यादाभिविध्योरिति किम् । ईषदर्थक्रियायोगयोर्मा भूत् । आकडारम् । आबद्धम् ॥

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ १६६ ॥

लक्षणं चिह्नम् । इत्थम्भूताख्यानं कञ्चित्प्रकारमापन्नस्य कथनम् । भागः स्वीक्रियमाणोंऽशः । वीप्सा पदार्थानां व्याप्तुमिच्छा । लक्षणादिष्वर्थेषु प्रतिपर्यनुशब्दाः कर्मप्रवचनीया भवन्ति । लक्षणे— वृक्षं प्रति विद्योतते विद्युत्, (वृक्षं परि), वृक्षमनु । इत्थम्भूताख्याने— साधुर्देवदत्तो मातरं

प्रति, मातरं (परि), मातरमनु। भागे — यदत्र मां प्रति स्यात्, मां परि, मामनु। वीप्सायां— वृक्षं वृक्षं प्रति सिञ्चति, वृक्षं वृक्षं परि, वृक्षं वृक्षमनु। लक्षणादिष्विति किम्। ओदनं परिषिञ्चति। कर्मप्रवचनीयसंज्ञायामसत्या-मुपसर्गत्वात् षत्वं भवति ॥

अभिरभागे ॥ १६७ ॥

भागवर्जिते लक्षणादावर्थे अभिशब्दः कर्मप्रवचनीयो भवति। वृक्ष-मभि विद्योतते विद्युत्। साधुर्देवदत्तो मातरमभि। वृक्षं वृक्षमभि सिञ्चति। अभाग इति किम्। यदत्र मेऽभिष्यात्, तद्दीयताम्। कर्मप्रवचनीयत्वाभा-वात् 'प्रादुरुपसर्गेभ्योऽस्तेर्यच्परस्य' इति षत्वम् उपसर्गाश्रयं भवति ॥

प्रतिः प्रतिनिधिप्रतिदानयोः ॥ १६८ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। तयोर्द्योत्ययोः प्रतिशब्दः कर्मप्रवचनीयो भवति। अभिमन्युरर्जुनतः प्रति। माषानस्मै तिलेभ्यः प्रतियच्छति। 'प्रतिनिधिप्रतिदानयोः' इति पञ्चमी ॥

अधिपरी अनर्थकौ ॥ १६९ ॥

अधिपरिशब्दावतिरिक्तार्थानभिधायिनौ कर्मप्रवचनीयौ भवतः। कुतोऽध्यागच्छति। कुतः पर्यागच्छति। 'गतिर्गतौ' इति निघातो न भवति। अनर्थकाविति किम्। अध्यागच्छति। पर्यागच्छति। परितो-भावस्य द्योतने कर्मप्रवचनीयत्वाभावात् गतित्वमस्त्येवेति गतिनिघातो भवति ॥

सुः पूजायाम् ॥ १७० ॥

सुशब्दः पूजायां कर्मप्रवचनीयो भवति। सु सिक्तं भवता। कर्म-प्रवचनीयत्वाद् 'गतिरनन्तरः' इति स्वरः षत्वं च न भवति। पूजायामिति किम्। सुषिक्तं किं तवात्र। धात्वर्थोऽत्र कुत्स्यते।

अतिरतिक्रमणे च ॥ १७१ ॥

अतिशब्दोऽतिक्रमणे पूजायां च कर्मप्रवचनीयो भवति। अति सिक्तं भवता। अति स्तुतं भवता। साधु सुष्ठु चेत्यर्थः। कर्मप्रवचनीयत्वे स्वरः षत्वं च न भवति॥

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु॥१७२॥

पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः। शक्तेरप्रतिघाताविष्करणं सम्भावनम्। कामचारानुज्ञानमन्ववसर्गः। निन्दा गर्हा। अपिशब्दः पदार्थादिषु कर्मप्रवचनीयो भवति। सर्पिषोऽपि स्यात्। मात्रा बिन्दुरित्यस्य पदस्यार्थो गम्यते। तदपेक्षया षष्ठी। सम्भावने—अपि सिञ्चेन्मूलकसहस्रम्। अन्ववसर्गे—अपि सिञ्च। गर्हायाम्—अपि स्तुयाद् वृषलम्। समुच्चये—अपि सिञ्च अपि स्तुहि। सिञ्च च स्तुहि चेत्यर्थः। सर्वत्रोपसर्गसंज्ञाबाधनात् षत्वं न भवति॥

अधिरीश्वरे[1]॥ १७३॥

ईश्वरः स्वामी। स च स्वमपेक्ष्य भवति। तदयमधिशब्दः स्वस्वामिसम्बन्धे कर्मप्रवचनीयो भवति। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः। 'सप्तम्याधिक्यस्वाम्ययोः' इति स्वाच्च स्वामिनश्च पर्यायेण सप्तमी॥

कृञा वा॥ १७४॥

करोतिना योगे अधिः कर्मप्रवचनीयो वा भवति। यदयमधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे उपसर्गसंज्ञाबाधनात् 'तिङ्युदात्तवति' इति गतिनिघातो न भवति॥

तेऽव्ययम्॥ १७५॥

ये पूर्वं प्रा(गी ? ग्री)श्वरान्निपाता उक्तास्तेऽव्ययसंज्ञा भवन्ति॥

स्वरन्तस्सनुतःपुनःप्रातस्सायंनक्तमस्तंवस्तोर्दिवादोषाह्यःश्वःकंशंयोस्समयश्चनोम्नोविहायसारोदस्योर्भूर्भुवस्स्वस्तयः॥ १७६॥

---

१. 'धीश्व' क. पाठः.

स्वरादयः पञ्चविंशतिरव्ययसंज्ञा भवन्ति । स्वरिति स्वर्गवाची । स्वः सुखयति । अन्तरिति मध्यवाची । अन्तर्वसति । सनुतरित्यन्तर्धाने । अस्मे आराचिद् द्वेषस्सनुतर्युयोतु । पुनरिति भूय इत्यर्थे । पुनरुक्तं वचः । प्रातरिति प्रत्यूषे । प्रातर्भुङ्क्ते । सायं नक्तमिति रात्रौ । सायं जुहोति । नक्तं भुङ्क्ते । अस्तमित्यनुपलब्धौ । सूर्यस्यास्तंकालो वर्तते । वस्तोरिति दिवसनाम । कुह वस्तोरश्विनौ । दिवा दोषेति दिवसरात्रिवचने । दिवामन्या रात्रिः । दोषामन्यमहः । ह्यः श्वः इति अतीतानागतदिवसवचने । ह्यस्तनः । श्वस्तनः । कमिति वारिमूर्धसुखेषु । कञ्जं वारिजम् । कञ्जाः केशाः । कंयुः । शमिति दुःखोपरमे । शङ्करः । योस् मयस् इति वैषयिकसुखे । शंयोरभिस्रवन्तु नः । नमश्शङ्कराय च मयस्कराय च । चनसित्यन्ननाम । चनो दधिष्व पचतोत सोमम् । 'पुनश्चनसौ गतौ' इति छन्दसि गतिसंज्ञाप्यस्य भवति । अह्नरिति शीघ्रसाम्प्रतिकयोः । अह्नरेवागच्छति । अह्न एवागच्छति । 'अह्नसूषसवसां रो वा' इति रेफो वा भवति । विहायसेति वियदर्थे । विहायसा रम्यतरं विभाति । रोदसीति । द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च । ओमिति ब्रह्मवाची । ओमित्येकाक्षरं ब्रह्म । भूर्भुव इति पृथिव्यन्तरिक्षयोः । भूर्लोकः । भुवर्लोकः । 'भुवसश्च महाव्याहृतेः' इति रेफः । स्वस्तीत्यविनाशनाम । स्वस्ति नो मिमीतामश्विना भग इति ॥

**समयानिकषान्तराबहिरसाम्प्रतमद्धासत्यमिद्धामुधामृषावृथामिथ्यामिथोमिथुर्मिथुनमनिशंमुहुरभीक्ष्णंमङ्क्षुझटित्युच्चैर्नीचैरवश्यंसामिसाच्चयः ॥ १७७ ॥**

समयाप्रभृतयः पञ्चविंशतिरव्ययसंज्ञा भवन्ति । समया निकषेत्येतौ सामीप्ये । समया ग्रामम् । निकषा ग्रामम् । अन्तरेति मध्यमाधेयप्रधानमाचष्टे । अन्तरा त्वां च मां च कमण्डलुः । बहिरित्यन्तःप्रत्यनीके । बहिर्ग्रामात् । असाम्प्रतमित्यन्याय्ये । विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् । अद्धेति स्फुटार्थे । आराधितोऽद्धा मुनिरप्सरोभिः । सत्यमिति तत्त्वे । सत्यं हारि नितम्बिनीकुचयुगम् । इद्धेति प्राकाश्ये । समिद्धमिद्धेष महो ददामि । मुधेति विफले । मुग्धे! मुधा ताम्यसि । मृषेत्य-

सत्ये । मृषा भाषसे । वृथेति वृथार्थे । वृथा विकत्थसे । मिथ्येति मृषार्थे । मिथ्या वदसि । मिथ इति रहोऽन्योन्यार्थे च । मिथो मन्त्रयते । मिथो वर्णयति । मिथुर्मिथुनमिति द्वौ द्वावित्यर्थे । मिथुर्मन्त्रयेथे । मिथुनं रमन्ते । अनिशमिति सातत्ये । अनिशं ददाति । मुहुरभीक्ष्णमिति पौनःपुन्ये । मुहुर्ददाति । अभीक्ष्णं ददाति । मङ्क्षु झटितीत्येतौ शैघ्र्ये । मङ्क्षु पचति । झटिति याति । उच्चैर्नीचैरित्युच्चनीचयोः । उच्चैर्वदति । नीचैः पठति । अवश्यमिति नियमे । अवश्यं करोति । सामीत्यर्धार्थे । सामिकृतम् । साचीति तिर्यगर्थे । साचि लोचनयुगं नमयन्ती ॥

विष्वगन्वगानुषक्त्राजग्द्राक्स्राकृधक्पृथग्धिक्हिरुक्ज्योङ्मनाक्छनैरीषज्जोषंतूष्णींकामंनिकामंप्रकाममारादरंवरंपरंचिरंतिरसः ॥ १७८ ॥

विष्वगादयः पञ्चविंशतिरव्ययसंज्ञा भवन्ति । विष्वगिति समन्ततोभावे । विष्वगञ्चतीति विष्व(द्र्य)ङ् । अन्वगित्यानुकूल्ये । अन्वग्भूयास्ते । आनुषगित्यानुपूर्व्ये । स्तृणन्ति बर्हिरानुषग् येषामिन्द्रो युवा सखा । त्राजक् द्राक् स्राक् इति शैघ्र्ये । त्राजक् पचति । द्रागधीते । स्राग् गच्छति । ऋधगिति सत्ये । ऋधग् ब्रवीति । पृथगिति नानात्वे । पृथक्करोति । धिगिति निन्दाभर्त्सनयोः । धिग् देवदत्तम् । धिग् जाल्मम् । हिरुगिति हिंसायाम् । हिरुक्करोति हैरुकः । ज्योगिति कालभूयस्त्वे । ज्योग् जीवाम । मनागित्यल्पार्थे । मनाग् ददाति । शनैरिति क्रियामान्द्ये । शनैर्गच्छति । ईषदिति मनागर्थे । ईषत्कडारः । जोषं तूष्णीमिति मौने । जोषमास्ते । तूष्णीम्भूय तिष्ठति । काममिति स्वाच्छन्द्यकामानुमत्योः । कामं भुङ्क्ते । कामं क्षाम्यतु यः क्षमी । निकामं प्रकाममित्यतिशये । निकामं क्षामाङ्गी । प्रकाममप्रीयत यज्वनां प्रियः । आरादिति दूरान्तिकयोः । आराद् दवीयः अपसेध शत्रून् । आराद् भव । आरादायाति । अरमिति शैघ्र्ये । अरं गच्छति । वरमिति हीनोत्कर्षे । वरमद्य कपोतः श्वो मयूरात् । परमिति किन्त्वर्थे । गुणवानसि परमहङ्कारी । चिरमिति कालविप्रकर्षे । चिरं जीवति । तिर इत्यन्तर्धानतिर्यगर्थयोः । तिरोभवति । तिरः काष्ठं करोतीति ॥

नमःस्वयंभूयःप्रायःप्रबाहुकमार्यहलंकलंबलवदतीव-सुष्ठुदुष्ठुऋतेसपदिसाक्षात्सनात्सनत्सनाशुसहसायुगपदुपांशुपुरतःपुरस्तात्पुरसः ॥ १७९ ॥

नमःप्रभृतयः पञ्चविंशतिरव्ययसंज्ञा भवन्ति । नम इति पूजायाम् । नमो देवेभ्यः । स्वयमित्यात्मना । स्वयं प्रदुग्धे । भूय इति पुनरर्थे । भूयः पचति । प्राय इति बाहुल्ये । प्रायः स इह नेष्यते । प्रबाहुकमिति समकाले । प्रबाहुकं गृह्णीयात् । आर्यहलमिति बलात्कारे । आर्यहलं गृह्णाति । कु इति कुत्सायामीषदर्थेऽपि । कुपुरुषः । कालवणम् । अलमिति समर्थे । अलं मल्लो मल्लाय । बलवदतीव सुष्ठु इत्यतिशये । बलवद्रोचते । अतीव शोभते । सुष्ठु विभाति । दुष्ठु इति कृच्छ्रार्थे । दुष्ठु करोति । ऋते इति विनार्थे । ऋते धर्मात् कुतः सुखम् । सपदीति तत्क्षणमित्यर्थे । सपदि गच्छति । साक्षादिति प्रत्यक्षे । साक्षाद् द्रष्टा साक्षी । सनात् सनत् सनेति सार्वकाल्ये । सनाद् देवनं शीलयते । सनाभिः सनत्कुमारः । सनातनः । शु इति पूजायाम् । शु अश्नुते श्वशुरः । सहसेत्याकस्मिकाविमर्शयोः । दिवः प्रसूनं सहसा पपात । सहसा विदधीत न क्रियाम् । युगपदित्येककालार्थे । युगपज्जल्पन्ति । उपांश्वित्यप्रकाशोच्चारणे । उपांशु जपति । कथमुपांशुवधः । उपचाराद् भवति । पुरतः पुरस्तात् पुर इत्यग्रतोर्थे । पुरतो धावति । पुरस्तात् तिष्ठति । पुरस्सर इति ॥

संश्वत्कुविदाविःप्रादुरादयश्च ॥ १८० ॥

संश्वदादयोऽव्ययसंज्ञा भवन्ति । असंश्वत् संश्वद् भवति संश्वायते । कुविद् ददाति । आविर्यशाः । प्रादुर्भाव इति । आदिग्रहणादन्येषामपि निपातेषूपात्तानामनुपात्तानां च स्वरादिसधर्मणामव्ययसंज्ञा भवति । तत्रोपात्ताः पुरातनः अस्तु श्रौषडित्यादयः । अनुपात्ताः बलात्कारः प्रसह्यहरणमित्यादयः । स्वरादयो हि स्वार्थस्य वाचका न निपातवद् द्योतका इति ॥

कृन्मेजन्तः ॥ १८१ ॥

कृद् यो मकारान्त एजन्तश्च, तदन्तः शब्दोऽव्ययसंज्ञो भवति । कर्तुम् । स्वादुंकारं भुङ्क्ते । एजन्तः—क्रत्वे दक्षाय जीवसे कर्तवै । अन्तग्रहणमौपदेशिकैजन्तप्रतिपत्त्यर्थम् । इह मा भूत् । उपाधये ॥

क्त्वातोसुन्कसुनः ॥ १८२ ॥

क्त्वातोसुन्कसुन्प्रत्ययान्ता अव्ययसंज्ञा भवन्ति । कृत्वा । पुरा सूर्यस्योदेतोः । पुरा क्रूरस्य विसृपः ॥

तद्धितस्तसादिः प्रा(ग? गु ध)णः ॥ १८३ ॥

(धणः प्राग् यस्तद्धितस्तसादिः,) तद(न्तोऽ)व्ययसंज्ञो भवति । ततः । तत्र । तदा । द्विधा । अव्ययत्वाद् विभक्तिलुगादयो भवन्ति ॥

अस्तात्यादिः प्राक् पाशपः ॥ १८४ ॥

पाशपः प्राग् ये तद्धिता अस्तात्यादयस्तदन्तोऽव्ययसंज्ञो भवति । पुरस्तात् । पुरः । पश्चात् । दक्षिणाहि । दक्षिणेन ॥

च्व्यादिः प्राक् समासान्तेभ्यः ॥ १८५ ॥

समासान्तेभ्यः प्राग् ये तद्धिताश्च्विप्रभृतयस्तदन्तश्शब्दोऽव्ययसंज्ञो भवति । शुक्लीकरोति । देवत्राकरोति । पटपटाकरोति ॥

कृत्वोर्थः ॥ १८६ ॥

कृत्वसुच्प्रत्ययार्थो यस्तद्धितस्तदन्तोऽव्ययसंज्ञो भवति । पञ्चकृत्वः पञ्चधा । द्विः । सकृत् ॥

तसिवतिनानाञ्शसिचामम ॥ १८७ ॥

तसि वति ना (आ?)नाञ् शस् इच् आम् अम् इत्येतत्तद्धितान्ता अव्ययसंज्ञा भवन्ति । उरसा एकदिक् उरस्तः । ब्राह्मणवत् । विना । नाना । बहुशो देहि । केशाकेशि । पचतितराम् । वितरं वरीयः ॥

लुङ्मुखस्वरयोरव्ययीभावः ॥ १८८ ॥

सुपो लुकि विधेये मुखस्वरे च निषेध्ये अव्ययीभावसमासोऽव्ययसंज्ञो भवति । लुकि — उपाग्नि । उपवधु । मुखस्वरे— उपाग्निमुखः । प्रत्यग्निमुखः । 'मुखं स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वं प्राप्तम् अव्ययीभावस्याव्ययत्वाद् 'नाव्ययदिक्च्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' इति प्रतिषि-

१. 'यन्नव्येति तद' क. पाठः.

ध्यते । तस्मिन् प्रतिषेधे पूर्वपदप्रकृतिस्वर एव भवति । लुङ्मुखस्वरयोरिति किम् । उपाग्नीत्यादावकञ् मा भूत् ॥

घटादय आत्मनेपदिनः षितः ॥ १८९ ॥

आत्मनेपदिनो घटादयः षित्संज्ञा भवन्ति । घटा । व्यथा । पृथेत्यादि । षित्वादङ् भवति । आत्मनेपदिन इति किम् । दुदुक्तिः(?) ॥

सर्वे मितः ॥ १९० ॥

घटादय आत्मनेपदिनोऽन्ये च वृत्पर्यन्ता मित्संज्ञा भवन्ति । घटयति । व्यथयति । हिडयति । 'मितां ह्रस्व' इति ह्रस्वत्वम् ॥

जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ॥ १९१ ॥

जनिप्रभृतयोऽमन्ताश्च मित्संज्ञा भवन्ति । जनयति । जरयति । क्नसयति । रजयति । रमयति । नमयति । सर्वत्र मित्वाद् ह्रस्वत्वम् ॥

दलिवलिस्खलिरणिध्वनिक्षपित्रपयश्च ॥ १९२ ॥

दल्यादयश्च धातवो मित्संज्ञा भवन्ति । दलयति । वलयति । स्खलयति । रणयति । ध्वनयति । क्षपयति । त्रपयति ॥

स्मृ आध्याने ॥ १९३ ॥

स्मरतिराध्याने चित्तैकपरतालक्षणे मित्संज्ञो भवति । स्मरयति । अन्यत्र स्मारयति ॥

भये ॥ १९४ ॥

दॄधातुर्भयेऽर्थे मित्संज्ञो भवति । दरयति । अन्यत्र दारयति ॥

नॄ नये ॥ १९५ ॥

नॄधातु(र्न ? र्नी)तावर्थे मित्संज्ञो भवति । नरयति । अन्यत्र नारयति ॥

श्रा पाके ॥ १९६ ॥

श्राधातुः पाकेऽर्थे मित्संज्ञो भवति । श्रपयति । अन्यत्र श्राणयति ॥

मारणतोषणनिशामनेषु ज्ञा ॥ १९७ ॥

रणादिष्वर्थेषु ज्ञाधातुर्मित्संज्ञो भवति । संज्ञपयति पशुम् । मार-

यतीत्यर्थः । संज्ञपयति प्रियम् । तोषयतीत्यर्थः । विज्ञपयति प्रभुम् । श्रावयतीत्यर्थः । मारणादिष्विति किम् । ज्ञापयति आदिशतीत्यर्थः ॥

कम्पने चलिः ॥ १९८ ॥

कम्पनेऽर्थे चलिर्मित्संज्ञो भवति । शिरश्चलयति । अन्यत्र सू(त्रां-श्चा? त्रं चा)लयति ॥

ऊर्जने छदिः ॥ १९९ ॥

छदिधातुरूर्जने मित्संज्ञो भवति । छदयति, ऊर्जयतीत्यर्थः । ऊर्जन इति किम् । छादयति, पिधत्त इत्यर्थः ॥

जिह्वोन्मन्थने लडिः ॥ २०० ॥

लडिधातुर्मन्थने जिह्वाविषये मित्संज्ञो भवति । लडयति जिह्वाम् । अन्यत्र लाडयति बालकम् ॥

हर्षग्लपनयोर्मदिः ॥ २०१ ॥

हर्षग्लपनयोरर्थयोर्मदिधातुर्मित्संज्ञो भवति । मदयति सुहृत् । हर्षयतीत्यर्थः । मदयति कोरदूषः । ग्लपयतीत्यर्थः । हर्षग्लपनयोरिति किम् । उन्मादयति ॥

ज्वलह्वलह्मलनमोऽनुपसर्गा वा ॥ २०२ ॥

ज्वलादय उपसर्गैरसम्बद्धा वा मित्संज्ञा भवन्ति । ज्वलयति ज्वालयति । ह्वलयति ह्वालयति । ह्मलयति ह्मालयति । नमयति नामयति । अनुपसर्गा इति किम् । प्रज्वलयति । प्रह्वलयति । प्रह्मलयति । प्रणमयति । आद्यानां त्रयाणां सोपसर्गाणां घटादित्वाद् नमोऽमन्तत्वान्नित्यं मित्संज्ञा भवति ॥

ग्लास्नावनुवमश्च ॥ २०३ ॥

ग्लादयश्च धातवोऽनुपसर्गा वा मित्संज्ञा भवन्ति । ग्लपयति ग्लापयति । स्नपयति स्नापयति । वनयति वानयति । वमयति वामयति । अनुपसर्गा इत्येव । प्रग्लापयति । प्रस्नापयति । उपवनयति । उपवमयति । आद्ययोरप्राप्ता वनेर्घटादित्वाद् वमेरमन्तत्वान्नित्यमित्संज्ञा प्राप्ता उपस(र्ग? र्गा)सम्बन्धे विकल्प्यते ॥

न कम्यमिचमः ॥ २०४ ॥

कमादयो मित्संज्ञा न भवन्ति । अमन्तत्वात् प्राप्ते प्रतिषेधः । कामयते । आमयति । आचामयति ॥

शम्वदर्शने ॥ २०५ ॥

शमुधातुर्दर्शनादन्यत्र मित्संज्ञो भवति । शमयति रोगम् । निशमयति श्लोकम् । दर्शने तु निशामयति रूपम् । अमन्तत्वात् सिद्धे नियमार्थं वचनम् । तेन दर्शने न भवति ॥

यम्त्वपरिवेषणे ॥ २०६ ॥

यमुधातुरपरिवेषण एव मित्संज्ञो भवति । यमयति । नियमयति । परिवेषणात्तु यामयति चन्द्रमसम् ॥

स्खदिरवपरिभ्यां च ॥ २०७ ॥

स्खदिधातुरवपरिभ्यां परः केवलश्च मित्संज्ञो भवति । सिद्धे सत्यारम्भो नियमार्थः । तेनान्योपसर्गपूर्वस्य न भवति । अवस्खदयति । परिस्खदयति । अवपरिभ्यां चेति किम् । प्रस्खादयति ॥

पॆण गतौ ॥ २०८ ॥

पणिधातुर्गतावर्थे मित्संज्ञो भवति । पणयति । अन्यत्र पाणयति ॥

धातोस्तिङ्शित् सार्वधातुकम् ॥ २०९ ॥

धातोरित्येवं विहितस्तिङ् शिच्च प्रत्ययः सार्वधातुकसंज्ञो भवति ॥

आर्धधातुकं शेषः[2] ॥ २१० ॥

धातोरिति विहितः । पच्यते । पच्यमानः । भविता ॥

वर्ज्यं नीभ्यां (?) सन्लिटौ च लिङाशिषि ॥ २११ ॥

चेनावधारणादार्धधातुकतैव । शिशयिषा । पेचिथ । भविषीष्ट । भक्त्या कृष्णे वर्ज्यं स्यात् । लिङ्लिटौ तिङौ । संस्तु न धातोः (?) ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

१. 'फ', २. 'षः । सन्' ख. पाठः.

## अथ द्वितीयः पादः ।

### आदिरितान्त्येन समध्यः ॥ १ ॥

क्वचिदुपदेशसन्निविष्टानां वर्णादीनाम् आदिरन्त्येनेता लक्षितः सजातीयैर्मध्यैः सह ग्राह्यो भवति । 'अकः सवर्णे दीर्घः' । दण्डाग्रम् । दधीदम् । मधूत्तमम् । पितॄर्षभः । 'तिङ् शित् सार्वधातुकम्' । पचति । पचामहे । 'सुप्सुपा' । राजपुरुषः । अन्त्येनेति किम् । सुडिति तृतीयैकवचनाद्येन टकारेण मा भूत् ॥

### उता सवर्गः ॥ २ ॥

उकारेण लक्षित आदिर्वर्गेण सह ग्राह्यो भवति । 'चोः कुः' । पक्तिः । 'पोरदुपधात्' । जप्यम् ॥

### ता तत्कालः ॥ ३ ॥

तकारेण लक्षितो वर्णस्तत्काल एव ग्राह्यो भवति । 'अत इञ्' । दाक्षिः । इह न भवति—कैलालपः ॥

### अविधीयमानोऽण् ससवर्णः ॥ ४ ॥

विधीयमानादन्योऽण् सवर्णैः सह ग्राह्यो भवति । 'अस्य च्वावनव्ययस्य' । शुक्लीभवति । खट्वीभवति । 'ऋहलोर्ण्यत्' । कार्यम् । तार्यम् । अविधीयमान इति किम् । 'सनाशंसिभिक्षिभ्य उः' । चिकीर्षुः । 'दिव उत्' इति तपरकरणाल्लिङ्गात् क्वचिद्विधीयमानोऽप्युकारः सवर्णान् गृह्णाति । 'अदसोऽत्वे दादु दो मः' । अमू । व्यक्तिपक्षे स्वरानुनासिक्यकालभिन्नानामपि ग्रहणं यथा स्यादिति वचनम् । जातिपक्षे त्वनारम्भ एवास्येति ॥

### दोऽपः ॥ ५ ॥

दो ग्रहणे पानुबन्धवर्जितस्यैवास्य ग्रहणं भवति । डुदाञ्—दीयते । 'मास्थासागापिबहाग्दाधां हलि' इतीकारः । अप इति किम् । दाप्—दायते केदारः । दैप्—अवादासीस्त्वम् ॥

अनंशचिह्नमित् ॥ ६ ॥

धात्वादीनामनवयवभूतं यच्चिह्नं तदिद् भवति । इदिति एति गच्छति लुप्यत इत्यर्थः । इदि इकारः, इन्दति । सन् नकारः, तितिक्षते । अनंशग्रहणं किम् । 'धातोर्हलादेरेकाचः क्रियासमभिहारे यङ्' । पापच्यते । चिह्नभूतोऽपि हल् न गच्छति । चिह्नग्रहणादुच्चारणार्थं एतीति इन्न व्यपदिश्यते । तेन वक्तेति वच्यादेशस्येदित्त्वान्नुम् न भवति ॥

अथास्यैव प्रपञ्चः —

अजुपदेशे ॥ ७ ॥

उपदिश्यतेऽनेनेत्युपदेशः शास्त्रवाक्यानि सूत्रपाठः खिलपाठश्च । तस्मिन्ननंशचिह्नभूतोऽज् इद् भवति । ञिमिदा आकारः । मिन्नः । 'आदितः' इतीद् न भवति । टुनदि इकारः, नन्दति । इदित्त्वान्नुम् । एवं प्रत्ययादावपि । गोमान् । श्रेयान् । उगित्त्वान्नुम् भवति ॥

हलन्त्यम् ॥ ८ ॥

उपदेशे यदनंशचिह्नमन्त्यं हल् तदिद् भवति । अइउणित्यादिषु णकारादयः । तेनाणित्यादयो हल्पर्यन्ताः प्रत्याहारा भवन्ति । हस्य ल् हलिति द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं द्रष्टव्यम् । तेन हलिति प्रत्याहारपाठे लकारस्योक्ते सति हलन्त्यमित्यत्र 'आदिरिनान्त्येन सहेता' इत्यस्य प्रवृत्तावितरेतराश्रयदोषो न भवति । एवं धातुप्रातिपदिकप्रत्ययविकारागमेष्वपि अन्त्यं हलिद् भवति । धातौ धेट्, स्तनन्धयी । टित्त्वात् ङीप् । प्रातिपदिके 'चित्रङ् आश्चर्ये' चित्रीयते । ङित्त्वादात्मनेपदम् । प्रत्यये सन्क्यजादौ नकारादयः स्वराद्यर्थाः । विकारे 'चक्षिङः ख्याञ्' इत्यादौ ञकारादयः उभयपदाद्यर्थाः । आगमे अट्नुमादिषु टकारादयो देशविध्यर्थाः ॥

किमिटोऽत् ॥ ९ ॥

किमिटोः सम्बन्धी योऽत् तस्यान्त्यं हलिद् भवति । उत्तरसूत्रेण नियमान्न प्राप्नोतीत्यारम्भः । 'किमोऽत्' । क्व । 'इटोऽत्' । पचेय । किमिटोरिति किम् ........................ ॥

## अविभक्तिशस्तसादौ तुस्माः ॥ १० ॥

हलन्त्यमित्यविशेषेण प्राप्तमित्त्वं तुस्मानामनेन नियम्यते । विभक्ति-शस्तसादिभ्योऽन्यत्रैव तवर्गसकारमकारा इतो भवन्ति । 'अचो यत्' । पेयम् । सन्, चिकीर्षति । युस्, ऊर्णायुः । श्नम्, रुणद्धि । अवि-भक्त्यादाविति किम् । सर्वस्मात् । वृक्षाः । वृक्षम् । बहुशः । यतः । इदा-नीम् ॥

## धातोरिर् ॥ ११ ॥

धातोः सम्बन्धि इर् इत्यनंशचिह्नभूतमिद् भवति । रुधिर्, अरु-धत् । अरौत्सीत् । 'इरितुजृश्वि —' इत्यादिना अङ्विकल्पः ॥

## आदिर्ञिटुडवः ॥ १२ ॥

धातोरादिभूता ञि टु डु इत्येते अज्झल्समुदाया अनंशचिह्नभूता इतो भवन्ति । ञिभी, भीतः । 'ञीतः क्तः' । टुनदि, नन्दथुः । 'ट्वितो-ऽथुच्' । डुपचष्, पक्त्रिमम् । 'ड्वितः क्त्रिः' ॥

## षः प्रत्ययस्य ॥ १३ ॥

प्रत्ययस्योपदेशे आदिः षकारोऽनंशचिह्नमिद् भवति । ष्वुन्, नर्तकी । षाकन्, वराकी । 'षितो ङीष्' ॥

## चुटू ॥ १४ ॥

चवर्गटवर्गावुपदेशे प्रत्ययस्याद्यावनंशचिह्नभूतौ इतौ भवतः । चङ्, अचीकरत् । जस्, वृक्षाः । ञः, पार्थिवः । छझयोरीयान्तादेशौ वक्ष्यति । टः, कुरुचरी । ड, उपसरजः । णिच्, कारयति । ठढयोरिकैयौ वक्ष्यति ॥

## लशक्वतद्धिते ॥ १५ ॥

लकारशकारकवर्गास्तद्धितेभ्योऽन्यस्य प्रत्ययस्यादौ वर्तमाना अनंश-चिह्नभूता इतो भवन्ति । ल्युः, नन्दनः । शप्, पचति । क्यच्, पुत्रीयति । खश्, जनमेजयः । घञ्, रामः । ङे, अग्नये । अतद्धित इति किम् । लच्, चूडालः । शः, रोमशः । कक्, आपमित्यकम् । ग्मिन्, वाग्ग्मी ॥

न चुञ्चुचणचरजाहटीटषड्गवकाम्येषु ॥ १६ ॥

चुञ्च्वादिषु चकारादय इतो न भवन्ति । केशचुञ्चुः । केशचणः । पटुचरः । कर्णजाहम् । अवटीटम् । अ(प ? श्व)षड्गवम् । वाक्काम्यति ॥

उभयथोणादिषु ॥ १७ ॥

उणादिषु प्रत्ययस्यादिभूताः षचवर्गादय उभयथा इतोऽनितश्च भवन्ति । तत्रानितः—ष, योषा । चट्, कूची । इत्यादि । इतो यथा—षिवन्, पृथिवी । चिपुक्, रिपुः । इत्यादि ॥

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ १८ ॥

इह शास्त्रे स्वरूपमेव शब्दस्य ग्राह्यं, न बाह्योऽर्थः, शब्दसंज्ञां वर्जयित्वा । शब्देनार्थावगतेरर्थे कार्यस्यासम्भवात् तद्वाचिनां सम्प्रत्ययो मा भूदिति सूत्रम् । 'अग्नेर्ढक्' । आग्नेय इत्याग्निशब्दस्यैव ग्राहको नाग्निपर्यायाणाम् । अशब्दसंज्ञेति किम् । 'वृद्धाच्छः' । शालीयः । उपलक्षणं चैतत् । तेन 'तेन रक्तं रागात्' इत्यादिषु न स्वरूपग्रहणम् ॥

येन विधिस्तदन्तस्य ॥ १९ ॥

येन विशेषणेन विधिरारभ्यते स तदन्तस्य प्रत्येतव्यः । 'एरच्' । इवर्णान्तादच् भवति । चयः । जयः । 'अत इञ्' । दाक्षिः । आद्यन्तवद्भावादस्यापत्यम् इः ॥

सुसर्वार्धदिक्छब्देभ्यो जनपदस्य ॥ २० ॥

'न प्रातिपदिकेन' इति तदन्तविधिप्रतिषेधस्यायं पुरस्तादपवादः । 'अवृद्धेभ्यो बहुवचनविषयेभ्यः' इति जनपदस्य यः प्रत्ययविधिः स सुसर्वार्धदिक्छब्देभ्यः परस्यापि जनपदस्य भवति । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । पूर्वपाञ्चालकः । 'सुसर्वार्धेभ्यो जनपदस्या-मद्राणां दिशश्च' इत्युत्तरपदवृद्धिः । प्रतिषिद्धस्य तदन्तविधेः पुनरनेन विधानात् केवलाद् भवत्येव । पाञ्चालकः । सुसर्वार्धदिक्छब्देभ्य इति किम् । परमपाञ्चालेषु भवः पारमपाञ्चालः । अणेव भवति ॥

ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ २१ ॥

ऋतुविशेषवाचिनो वृद्धिनिमित्तं यस्ताद्धितविधिः स ऋत्ववयवेभ्यः परस्यापि ऋतोर्भवति । 'ऋतुनक्षत्रेभ्योऽण्' । पूर्वग्रैष्मम् । अपरशैशिरम् । 'अवयवादृतोः' इत्युत्तरपदवृद्धिः । वृद्धिमद्विधाविति किम् । प्रावृषेण्यः ॥

प्रकृत्यधिकारे महदादिभिः ॥ २२ ॥

प्रकृत्यधिकारे महदादिभिर्विशेषणे प्रकृतेस्तदन्तविधिर्भवति । '(सान्त)महतोर्नुमि' इति दीर्घो यथा महान्, तथा परममहान् । अप्स्वसृनप्त्रादीनां दीर्घो यथा आपः कर्तारौ, तथा स्वापः परमकर्त्तारौ ॥

पदाधिकारेऽहन्नादिभिः ॥ २३ ॥

पदाधिकारे अहन्नित्यादिभिर्विशेषणे पदस्य तदन्तविधिर्भवति । 'अह्नः' इति यथेह रुः अहोभ्याम्, एवं दीर्घाहा निदाघ इति । 'स्रंसुध्वंस्वनडुहां दः' यथा अनडुद्भ्यां, तथा स्वनडुद्भ्याम् ॥

प्रत्ययग्रहणे यस्मात् स विधिस्तदादेरपञ्चम्याः॥ २४ ॥

यत्र प्रत्ययो गृह्यते, तत्र यस्मात् स विहितस्तदादेस्तत्प्रत्ययान्तस्य ग्रहणं भवति, न चेत् पञ्चम्यन्तात् परस्य प्रत्ययस्य कार्यं भवति । 'सनाद्यन्ताश्चाणिङः' । चिकीर्षति । इह न भवति—प्राचिकीर्षत् । 'यञिञो फक्' । गार्ग्यायणः । दाक्षायणः । इह न भवति—परमगार्ग्यस्यापत्यं, परमदाक्षेरपत्यम् । अपञ्चम्या इति किम् । अन्तस्तीर्णम् । दृषत्तीर्णम् । रदाभ्यामुत्तरस्य (निष्ठातकारस्तृ ? तृ)तकारस्य नत्वं न भवति । निष्ठाया एव भवति ॥

कृद्ग्रहणे गतिकारकपूर्वस्यापि ॥ २५ ॥

यत्र कृत्प्रत्ययो गृह्यते, यस्मात् स विहितस्तदादेर्गतिकारकपूर्वस्यापि ग्रहणं भवति । सप्तमी क्षेपे क्तान्तेन समस्यते । यथा भस्मनिहुतं, तथोदकेविशीर्णम्, अवतप्तेनकुलस्थितमिति । सगतिकेन सनकुलेन च क्तान्तेन समासः सिद्धः ॥

न प्रातिपदिकेन ॥ २६ ॥

विशेषणेनापि तदन्तविधिर्न भवति । द्वितीया श्रितादिभिः समस्यते । कष्टश्रितः । इह न भवति — कष्टं परमश्रितः । 'गर्गादिभ्यो यञ्' । गर्गस्यापत्यं गार्ग्यः । इह न भवति — परमगर्गस्यापत्यम् ॥

यस्मिन् विधिस्तदादावल्ग्रहणे ॥ २७ ॥

यस्मिन्निति सप्तमीनिर्दिष्टे अल्ग्रहणे विशेषणभूते यो विधिः, स तदादौ विशेषे वेदितव्यः । तदन्तविधेरपवादः । 'अचि श्नुधातुभ्रुवां य्वो-रियुवौ' । श्रियाम् । भ्रुवाम् । केवले आदिवद्भावात् । इह न भवति — श्रीषु, भ्रूषु । अल्ग्रहणं किम् । 'कोः कत् त्रिरथवदेषु' । इहैव भवति — कद्रथः । इह न भवति — कुरथाङ्गम् ॥

सप्तम्या निर्दिष्टे पूर्वस्य ॥ २८ ॥

सप्तम्या निर्दिष्टे यत् कार्यं, तत् पूर्वस्यानन्तरस्य स्थाने भवति । 'इको यणचि' । दध्यत्र । मध्वत्र । निर्दिष्टग्रहणमानन्तर्यार्थम् । तेनेह न भवति — समित्र(ः) ॥

पञ्चम्या परस्य ॥ २९ ॥

पञ्चम्या निर्दिष्टे यत् कार्यं, तत् परस्य स्थाने भवति । 'अतो भिस ऐस्' । वृक्षैः । प्लक्षैः ॥

षष्ठ्यान्त्यस्य ॥ ३० ॥

षष्ठ्या निर्दिष्टे यत् कार्यं, तदन्त्यस्य स्थाने भवति । 'अष्टनो वा सुप्स्वात्' । अष्टाभिः । अष्टभिः ॥

ङित् ॥ ३१ ॥

यो ङिद्विधिः, स षष्ठीनिर्दिष्टस्यालोऽन्त्यस्य स्थाने भवति । 'व्या-सादीनामकङ् च' । वैयासाकिः । 'अनेकाल् सर्वस्य' इत्यस्यायं पुरस्ता-दपवादः । तातङ्तुह्योस्तु ङित्करणं गुणवृद्धिप्रतिषेधे सावकाशमिति परत्वादनेकाल् सर्वस्येत्येतदेव भवति ॥

अन्त्याभावेऽन्त्यसदेशस्य ॥ ३२ ॥

षष्ठीनिर्दिष्टस्य कार्यमुच्यमानम् अन्त्यस्य कार्यिणोऽसम्भवे अन्त्यसमानदेशस्यान्त्यासन्नस्य भवति । 'अल्लोपोऽनः' इत्यन्नन्तायाः प्रकृतेरतो लोपः । अर्यम्णः पश्य ॥

परस्यादेः ॥ ३३ ॥

पञ्चमीनिर्दिष्टात् परस्य कार्यं शिष्यमादेरलः प्रत्येतव्यम् । 'ईदस्यासः । आसीनः । अध्यासीनः । 'षष्ठ्यान्त्यस्य' इत्यस्यापवादः ॥

शिदनेकाल् सर्वस्य ॥ ३४ ॥

शिच्चानेकाल् चादेशः सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति । 'जश्शसोः शिः' । कुण्डानि । 'अस्तेर्भूः' । भाविता । 'षष्ठ्यान्त्यस्य' इत्यस्यापवादः ॥

टकितावाद्यन्तौ ॥ ३५ ॥

टित्कितौ विधीयमानौ षष्ठीनिर्दिष्टस्य यथासङ्ख्यम् आद्यन्तौ वेदितव्यौ । 'लुङ्लङ्लृङ्क्ष्वडमाङ्योगे' । अकार्षीत् । वलादेरिट् । भाविता । 'त्रपुजतुनोः षुक्' । त्रापुषम् । जातुषम् । आज्जसेरसुक्' । देवासः । षष्ठ्येत्येव । 'चरेष्टः' । कुरुचरी । 'आङि दः किः' । आदिः । पूर्वान्ते हि कि(प्रत्यये) धातुग्रहणेन ग्रहणादाद्योरिति इय् स्यात् ॥

मिदचोऽन्त्यात् परः ॥ ३६ ॥

मिद् विधीयमानः षष्ठीनिर्दिष्टस्यान्त्यादचः परो भवति । 'वच उम्' । अवोचत् । 'इदितो' नुम् । नन्दति । 'षष्ठ्यान्त्यस्य' इत्यस्यापवादः ॥

ऋकोऽणो रलौ ॥ ३७ ॥

ऋकारलृकारयोः स्थाने योऽण तस्मात् परौ यथासङ्ख्यं रेफलकारौ भवतः । कर्ता । कारयति । यो ह्युभयोः स्थाने भवति लभते सोऽन्यतरव्यपदेशमितीहापि भवति । पितुः । मातुः । तवल्कारः । ऋक इति किम् । खेयम् । अण इति किम् । आनङ्, होतापोतारौ । अन्त्यग्रहणानुवृत्तेरिमौ रलौ पूर्वभक्तौ भवतः । तेन धूः पूरित्यत्र रेफस्य धातुसम्बन्धित्वे 'धातोर्वोरनचीक' इति दीर्घत्वम् ॥

निर्दिश्यमानस्यादेशाः ॥ ३८ ॥

षष्ठ्या निर्दिश्यमानस्यादेशा नतु तदन्तसमुदायस्य भवन्ति । 'पादः पत्' । व्याघ्रपदः । व्याघ्रपदा । पादान्तस्य न भवति । 'क्त्वो ल्यप्' प्रकृत्य । क्त्वान्तस्य न भवति ॥

स्थानेऽन्तरतमः ॥ ३९ ॥

स्थाने विधीयमानानामादेशानां मध्ये अन्तरतमः सदृशतम एवादेशो भवति । आन्तर्यं च स्थानार्थगुणप्रमाणेभ्यः । स्थानतः — दण्डाग्रम् । कण्ठ्ययोरकारयोः कण्ठ्य एवाकारः । अर्थतः — वातण्ड्ययुवतिः । वतण्डीशब्दस्य पुंवद्भावेनान्तरतमः पुंशब्दः । गुणतः — पाकः । चकारस्याघोषस्याल्पप्राणस्य तद्गुण एव ककारः । प्रमाणतः — अमुष्मै, अमूभ्याम् । ह्रस्वस्य ह्रस्वो दीर्घस्य च दीर्घ उवर्णः । आदेशाधिकारादेव लब्धे स्थानग्रहणं यत्रानेकमान्तर्यं, तत्र स्थानकृतमान्तर्यं बलीय इति ज्ञापनार्थम् । तेन चेता स्तोतेति प्रमाणतस्त्वकारो गुणः प्राप्तः । स्थानसाम्यादेकारौकारौ गुणौ भवतः । तमग्रहणमत्यन्तसादृश्यार्थम् । तेन घातयतीति हकारस्य सोष्मणो नादवतः सोष्मा नादवांश्च कुत्वं घकारः ॥

एच इग्घ्रस्वादेशे ॥ ४० ॥

एचः स्थाने ह्रस्वे आदिश्यमाने इगेव भवत्यान्तरतम्यात् । हेड, हिडयति । अतिरि । चित्रगुः । अतिनु । एचः समाहारवर्णाः । मात्रा अवर्णस्य मात्रा इवर्णोवर्णयोः । तत्र कदाचिद् अवर्णः स्यात्, कदाचिदिवर्णोवर्णौ । मा कदाचिदप्यवर्णो भूदिति सूत्रम् ॥

इको गुणवृद्धी ॥ ४१ ॥

परिभाषेयं स्थानिनियमार्था । गुणवृद्धिसंज्ञा(भ्यां) विधीयमाने गुणवृद्धी इक एव स्थाने भवतः । गुणः — जयति । भवति । बिभर्ति । आत्सन्ध्यक्षरव्यञ्जनानां न भवति । यानम् । ग्लायति । (वभि?उम्भि)ता । वृद्धिः — अचैषीत् । अहौषीत् । अकार्षीत् । इह न भवति — औम्भीत् । गुणवृद्धी इत्येवं ये गुणवृद्धी इति विज्ञानादिह नियमो न भवति । 'दिव उत्' । द्युभ्याम् । 'दिव औत्' । द्यौः ॥

## अचो ह्रस्वदीर्घप्लुताः ॥ ४२ ॥

ह्रस्वो दीर्घः प्लुत इत्येवं ये ह्रस्वदीर्घप्लुता विधीयन्ते, तेऽच एव स्थाने भवन्ति । ग्रामणि कुलम् । अतिरि । अतिनु । इह न भवति — सुवाक्कुलम् । दीर्घः — स्तूयते, चीयते, श्रूयते । इह न भवति — पच्यते । प्लुतः — देवदत्त३, अग्निचि३त् इति । हलो न भवति । संज्ञाविधिनियमादिह न भवति — द्यौः, पन्थाः, स इति ॥

## स्थानिवदादेशोऽनल्विधौ ॥ ४३ ॥

स्थानं प्रसङ्गः, सोऽस्यास्तीति स्थानी । आदिश्यत इत्यादेशः । तयोः पृथक्त्वात् स्थानिकार्यमादेशे न प्राप्नोतीत्यतिदिश्यते । आदेशः स्थानिवद् भवति स्थान्याश्रयाणि कार्याणि प्रतिपद्यते, न चेत् तानि स्थान्यलाश्रयाणि भवन्ति । किमुदाहरणम् । धातुप्रकृतिकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः । धात्वादेशो धातुवत् । 'अस्तेर्भूः' । आर्धधातुकविषये प्रागेवादेशे कृते 'धातो' इति तृजादयो भवन्ति । भविता । भवितुम् । प्रकृत्यादेशः प्रकृतिवत् । काभ्याम् । किमः कादेशे कृते प्रकृत्याश्रयं दीर्घत्वं भवति । कृदादेशः कृद्वत् । प्रकृत्य । क्त्वो ल्यबादेशे कृते 'ह्रस्वस्य पिति कृति' इति तुग् भवति । तद्धितादेशस्तद्धितवत् । दाधिकम् । 'कृत्तद्धित —' इत्यादिना प्रातिपदिकसंज्ञा भवति । अव्ययादेशोऽव्ययवत् । प्रस्तुत्य । 'अव्ययाद् —' इति सुब्लुग् भवति । सुबादेशः सुब्वत् । वृक्षाय । 'सुपि' इति दीर्घत्वं भवति । तिङादेशस्तिङ्वत् । अकुरुताम् । *'सुप्तिङन्तं पदम्' इति पदसंज्ञा । पदादेशः पदवत् । ग्रामो वः स्वम् । 'पदस्य' इति रुत्वं भवति । वत्करणं किम् । स्थान्यादेशस्य संज्ञा मा विज्ञायीति स्वाश्रयमपि यथा स्यात् । 'आङो यमहनः' । आहत आवधिष्टेत्यात्मनेपदमुभयत्रापि । आदेशग्रहणं किम् । आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात् । पचतु, पचन्त्विति । अलाश्रया विधिरल्विधिरिति मध्यमपदलोपिनः समासस्याश्रयणात् अलः परस्य विधिः' अलि परतो विधिः, अलः स्थाने विधिः, अला वा विधिः, अप्रधानाला-'

* 'विभक्त्यन्तं पदम्' इत्येव सूत्रपाठः.

श्रयो वा विधिरल्विधिरिति सर्वत्रानल्विधाविति प्रतिषेधः । तेन द्यौः पन्थाः सः इत्यादिषु औत्वात्वत्वयत्वाद्यत्वादिषु कृतेषु स्थानिवद्भावाभावात् सुलोपादिकार्याणि न भवन्ति ॥

## अचः परस्मिन् पूर्वविधौ ॥ ४४ ॥

अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवद् भवति। पटयति मृगयते इति टिलोपाल्लोपयोः स्थानिवद्भावादुपधालक्षणा वृद्धिर्लघूपधलक्षणो गुणश्च न भवति । अच इति किम् । प्रश्नः । अत्र शादेशस्तुकि कर्तव्ये स्थानिवन्न भवति । परस्मिन्निति किम् । युवजानिः । 'जायाया निङ्' । अपरनिमित्तको निङ् यलोपे कर्तव्ये स्थानिवन्न भवति । पूर्वविधाविति किम्। हे गौः! । (उ? ओ)त औद्भावः परविधौ सम्बुद्धिलोपे स्थानिवन्न भवति । अल्विध्यर्थं वचनम् ॥

## न पदान्तद्विर्वचनसवर्णानुस्वारजश्चर्विधिषु ॥ ४५ ॥

पूर्वेणातिप्रसक्तः स्थानिवद्भावः प्रतिषिध्यते । पदान्तादिविधिष्वजादेशः परनिमित्तकः स्थानिवन्न भवति । पदान्तविधौ— कौ स्तः । अस्तेरल्लोपः पूर्वविधावावादेशे कर्तव्ये स्थानिवन्न भवति । द्विर्वचनविधौ — दध्यत्र । यणादेशः परनिमित्तको धकारस्य द्विर्वचने स्थानिवन्न भवति । सवर्णविधौ— शिण्ढि । श्नमोऽकारस्य लोपोऽनुस्वारस्य परसवर्णे कर्तव्ये स्थानिवन्न भवति । अनुस्वारविधौ— पिंषन्ति । श्नमोऽकारलोपो नकारस्यानुस्वारे कर्तव्ये स्थानिवन्न भवति । जश्विधौ— बब्धां ते हरी धानाः । भसेर्लोट् । तसस्तामादेशः । श्लौ द्विर्वचने च कृते 'घसिभसोर्हलि' इत्युपधालोपो भकारस्य जश्त्वे कर्तव्ये स्थानिवन्न भवति । चर्विधौ — जक्षतुः । घसेरुपधालोपो घकारस्य चर्त्वे कर्तव्ये स्थानिवन्न भवति ॥

## स्वरदीर्घयलोपेषु लोपः ॥ ४६ ॥

स्वरविधौ दीर्घविधौ यलोपविधौ च लोपोऽजादेशः स्थानिवन्न भवति । स्वरविधौ— चिकीर्षकः । ण्वुलि कृते अतो लोपः परनिमित्तको 'लिति प्रत्ययात् पूर्वमुदात्तमि'ति स्वरे कर्तव्ये स्थानिवन्न भवति । तेन ईकारे स्वरः । दीर्घविधौ —प्रतिदीव्नः । 'अल्लोपोऽनः' इत्यकारलोपो दीर्घे

कर्तव्ये स्थानिवन्न भवति । यलोपविधौ—कण्डूतिः । कण्डूयतेः क्तिनि कृते अतो लोपो 'ल्वोर्वलि' इति यलोपे कर्तव्ये स्थानिवन्न भवति । लोप इति किम् । बहुखट्वकः । 'आपो वा' इति ह्रस्वस्य स्थानिवद्भावात् 'कपि पूर्वमुदात्तम्' इत्येतद् भवति, नतु 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' इति । गिर्योरिति यणादेशस्य स्थानिवद्भावाद् 'धातोर्वोः—' इत्यादिना न दीर्घः । वाय्वोरिति यणादेशस्य स्थानिवद्भावाद् 'ल्वोर्वलि' इति यलोपो न भवति ॥

वरक्विलुक्कखोपधात्वेषु ॥ ४७ ॥

वरे क्वौ लुकि कखोपधात्वे च लोपोऽजादेशः स्थानिवन्न भवति । वरे — यायावरः । यातेर्यङन्ताद् वरचि कृते अतो लोपः परनिमित्तको 'लोपोऽचि क्ङिति चातः' इत्याकारलोपे कर्तव्ये स्थानिवन्न भवति । क्वौ — देवयतेः क्विप्, दयूः । लवमाचष्टे क्विप्, लौः । णिलोपाल्लोपावूठि कर्तव्ये स्थानिवन्न भवतः । लुकि — पञ्च इन्द्राण्यो देवता अस्य पञ्चेन्द्रः स्थालीपाकः । अत्र तद्धितङीषोर्लुकः स्थानिवद्भावप्रतिषेधाद् ङीप्सन्नियुक्तस्यानुकः श्रवणं 'यस्येति च' लोपश्च न भवति । कखोपधात्वे — इलुकाया अदूरभवमैलुकं, परिखायाः पारिखम् । तत्र भवमैलुकीयं पारिखीयमित्याणि आकारलोपः कखोपधलक्षणे छप्रत्यये कर्तव्ये स्थानिवन्न भवति । कखाभ्यामुपधाविशेषणं किम् । पटयतीत्यत्र टिलोपस्य स्थानिवद्भावप्रतिषेधेनोपधालक्षणा वृद्धिः स्यात् ॥

पूर्वत्रासिद्धे चासंयोगादिलोपलत्वणत्वेषु ॥ ४८ ॥

पूर्वत्रासिद्धेषु च यत् कार्यमुच्यते, तस्मिन् संयोगादिलोपलत्वणत्ववर्जितेऽजादेशः स्थानिवन्न भवति । पापच्यतेः पापक्तिः । याजयतेः याष्टिः । अत्राल्लोपणिलोपयोः स्थानिवद्भावप्रतिषेधात् झल्निमित्ते कुत्वषत्वे भवतः । असंयोगादिलोपलत्वणत्वेष्विति किम् । काक्यर्थं वास्यर्थम् । यणादेशस्य स्थानिवद्भावात् स्कोः संयोगादिलोपो न भवति । निगार्यते । निगाल्यते । णिलोपस्य स्थानिवद्भावाद् 'अचि वा' इति वैकल्पिकं लत्वं भवति । माषवपनी । व्रीहिवपनी । अत्रोत्तरपदान्तस्य नकारस्य णत्वं विधीयमानमतो लोपस्य स्थानिवद्भावान्न भवति । समासश्च ङीषुत्पत्तेः प्राक् कृदन्तेनैव द्रष्टव्यः ॥

### आदिष्टादचः पूर्वस्य ॥ ४९ ॥

आदिष्टादेवाचः पूर्वस्य विधौ कर्तव्ये अजादेशः परनिमित्तकः स्थानिवन्न भवति । इयेष । उवोष । अत्र गुणादेशस्य स्थानिवद्भावप्रतिषेधाद् 'अभ्यासस्यासवर्णे' इतीयुवौ भवतः ॥

### द्विर्वचनेऽचि ॥ ५० ॥

द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचने देष्टव्ये स्थानिवद् भवति। रूपातिदेशोऽयं नियतकालः । कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते । आल्लोपाल्लोपणिलोपयणयवायावादेशाः प्रयोजनम् । आल्लोपः—दधतुः । अत्रातो लोपस्य स्थानिवद्भावाद् 'एकाज् —' इति द्विर्वचनं भवति । अल्लोपः— जग्मतु । 'गमहनजन—' इत्यादिना कृतस्याल्लोपस्य स्थानिवद्भावात् साच्कलक्षणं द्विर्वचनं भवति । णिलोपः—आटिटत् । णिलोपस्य स्थानिवद्भावाद् 'अजादेर्द्वितीय' इति द्विर्वचनं भवति । यण् —चक्रतु । करोतेरतुसि यणादेशस्य स्थानिवद्भावाद् द्विर्वचनं भवति । अयवायावादेशाः—निनय, लुलव निनाय, लुलाव । नयतेर्लुनातेश्चोत्तमे णलि गुणे वृद्धौ च कृतायामयवायावादेशानां स्थानिवद्भावाद् ने लो नै लाविति द्विर्वचनं भवति । द्विर्वचन इति किम् । जग्ले । अत्राकारस्य पृथक्श्रवणं परेण वा सहेति वृद्धिर्न भवति । आत्वस्य त्वाशिदेज्विषये विधानादनैमित्तिकत्वामिति (श्लै ? ग्लै) इति द्विर्वचनं न भवति । द्विर्वचननिमित्त इति किम् । दुद्यूषति । ऊठि यणादेशो द्विर्वचने कर्तव्ये स्थानिवन्न भवति । अचीति किम् । जेघ्रीयते । य(दि ? ङि) घ्री आदेशस्य स्थानिवद्भावादीकारान्तद्विर्वचनं (न) भवति ॥

### णिच्यनित् ॥ ५१ ॥

णिचि निमित्ते इद्वर्जितो योऽजादेशः, स द्विर्वचने कर्तव्ये स्थानिवद् भवति । पुस्फारयिषति । जुहावयिषति । ऊर्णुनावयिषति । अत्र स्फारे-(त्यत्रात्व)स्यान्यत्रावादेशस्य स्थानिवद्भावादुवर्णान्तमभ्यासरूपं भवति । अनिदिति किम् । अचिकीर्तत् ॥

### आद्यन्तवदेकस्मिन् ॥ ५२ ॥

असहायस्याद्युपदिष्टान्यन्तोपदिष्टानि च कार्याणि न प्राप्नुवन्तीष्यन्ते चेत्यतिदिश्यन्ते । आदाविवान्त इवैकस्मिन्नपि कार्यं भवति । श्रियौ । भ्रुवौ । अत्र ह्यजादौ प्रत्यये विधीयमानावियुवादेशावेकस्मिन्नप्यादिवद्भावाद् भवतः । खट्वे इति माले इति । एदन्तद्विवचनलक्षणा प्रगृह्यसंज्ञा एकस्मिन्नप्येकाररूपे द्विवचने अन्तवद्भावात् भवति ॥

प्रकृतिवदनुकरणम् ॥ ५३ ॥

धात्वादिप्रकृतिवत् तदनुकरणमपि व्यपादिश्यते । 'पूजाभिभवयोः पुवः संज्ञायाम्' इत्यादौ धात्वाद्यनुकरणानां धात्वादिनिबन्धना इयुवादयो भवन्ति । अग्नी इत्याह, द्विः पचन्त्वित्याह, इत्यादौ प्रगृह्यतिङन्तानुकरणानां प्रकृतिवद्भावः, अचसन्धिः, 'तिङ्ङतिङ' इति निघातश्च भवति ॥

एकदेशविकृतमनन्यवत् ॥ ५४ ॥

एकदेशविकृतं शब्दरूपमनन्यवद् भवति, तदेव भवतीत्यर्थः । अतिजरसा अतिजरसैरित्यादौ कृतह्रस्वत्वेऽपि जराशब्दः स एवेति जरसादेशो भवति ॥

भूतपूर्वकत्वात् तद्वदुपचारः ॥ ५५ ॥

निवृत्तेष्वपि जकारादिष्वनुबन्धेषु जसादीनां जसित्यादयो व्यपदेशा भवन्ति ॥

भाविनि भूतवदुपचारः ॥ ५६ ॥

भविष्यतीति भावि । तस्मिन्नर्थे भूतवदुपचारो भवति । अस्यै आसामिति भाविनोरपि स्याट्सामादेशयोर्भूतवद्भावाद् 'हल्यनकोऽश्' इति इदमोऽशादेशो भवति ॥

अवयवेऽप्यवयविवदुपचारः ॥ ५७ ॥

अवयविनि यथा तथा तदवयवेऽप्युपचारो व्यवहारो भवति । 'उपसर्गात् सुनोतिसुवति—' इत्यादौ 'उपसर्गाददुरो णोपदेशस्य' इत्यादौ चोपसर्गावयवयोः षत्वणत्वनिमित्तयोरिण्रेफयोरुपसर्गव्यपदेशः । अभिषुणोति ॥

प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ५८ ॥

प्रत्ययस्य लोपे कृते सत्यपि प्रत्ययनिमित्तं प्रकृतेः कार्यं भवति। अग्निचित् । अधोक् । लुप्तयोरपि सुप्तिङोः 'विभक्त्यन्तं पदम्' इति पदसंज्ञा भवति । प्रत्ययग्रहणं किम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्, प्रत्ययैकदेशलोपे मा भूत् । आघ्नीत आघ्नीयातामिति सीयुट्सकारलोपे कृते झलादिलक्षणोऽनुनासिकलोपो न भवति । पुनः प्रत्ययग्रहणं किम् । प्रत्ययलक्षणं यथा स्याद्, वर्णलक्षणं मा भूत् । रायः कुलं रैकुलं नौकुलं, गोहितमित्यादावायावादयो न भवन्ति ॥

न लुमता प्रकृतेः ॥ ५९ ॥

लुका श्लुना लुपा च लुप्ते प्रत्यये प्रत्ययलक्षणं कार्यं प्रकृतेर्न भवति। गर्गाः । मृष्टः । पञ्चालाः । अत्र यञ्शवण्प्रत्ययेषु लुप्तेषु प्रकृतेर्गुणवृद्धी न भवतः । प्रकृतेरिति किम् । पञ्च । सप्त । साम । पयः । सुप्प्रत्ययलक्षणपदसंज्ञानिबन्धनानि नलोपरुत्वादीनि भवन्ति । लुमतेति किम् । कार्यते । णिलोपेऽपि तल्लक्षणा वृद्धिर्भवति ॥

णियकोः ॥ ६० ॥

णौ यकि च परतो लुमता लुप्ते प्रत्यये प्रत्ययलक्षणं न भवति। अप्राकृतस्यापि कार्यस्य प्रतिषेधार्थं वचनम् । स्रुचमाचष्टे स्रुचयति, उषसं करोति (उषस्यति) । सुब्लुकि कृते प्रत्ययलोपलक्षणेन पदान्तनिबन्धनाः कुत्वरुत्वादयो न भवन्ति ॥

उत्तरपदत्वे चापदादिविधौ ॥ ६१ ॥

पदादिविधेरन्यत्रोत्तरपदत्वे लुमता लुप्ते प्रत्ययलक्षणं न भवति । परमवाचा । परमगोदुहा । परमदिवा । प्रत्ययलोपलक्षणेन पदान्तनिबन्धनानि कुत्वघत्वोत्वानि न भवन्ति । अपदादिविधाविति किम् । दधिसेचौ दधिसेचः । अत्र प्रत्ययलक्षणेन पदसंज्ञायां 'न सात्पदाद्योः' इति उत्तरपदादिनिबन्धनः षत्वप्रतिषेधो भवति ॥

यथासङ्ख्यमनुदेशः समानाम् ॥ ६२ ॥

अनुदिश्यत इत्यनुदेशः, पश्चादुच्चार्यत इत्यर्थः । उद्देशिनां च

तुल्यसङ्ख्यानां यथाक्रममभिसम्बन्धो भवति । प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेनेत्यादि । 'तस्थस्थवस्मसां तांतंतवमाः' पचताम् । पचतम् । पचत । पचाव । पचाम । समानामिति किम् । 'सङ्ख्याङ्खयोपलक्षणेष्व(ञ्य)ञिञः' । अत्र सङ्ख्यादयश्चत्वारः अञादयश्च त्रय इति सङ्ख्यावैषम्यात् सर्वेषां प्रत्येकमभिसम्बन्धः ॥

विवक्षातः कारकाणि ॥ ६३ ॥

प्रयोक्तुर्वक्तुमिच्छया कर्मादीनि कारकाणि भवन्ति । विवक्षा च कुलवधूरिव न लौकिकीं प्रयोगमर्यादामतिक्रामति । स्थाली पचति, स्थाल्यां पचति । अक्षान् दीव्यति, अक्षैर्दीव्यति, अक्षेषु दीव्यति, अक्षाणां दीव्यति । विवक्षायाश्च नियतत्वात् सत्यप्यपाये धनुषा विध्यतीत्येव, न धनुषो विध्यतीति । कंसपात्र्यां भुङ्क्त इत्येव, न कंसपात्र्या भुङ्क्त इति ॥

सूत्रे लिङ्गवचनाद्यप्रामाण्यमविवक्षातः ॥ ६४ ॥

सूत्रेषु लिङ्गवचनकालादीनां विवक्षाया अभावादप्रामाण्यं भवति । 'कर्मणा क्रियया वा यमभिप्रैति स सम्प्रदानम्' इति पुल्लिङ्गैकवचनेन वर्तमानकालेन च निर्देशे तदप्रामाण्याल्लिङ्गान्तरवचनान्तरकालान्तरेष्वपि सम्प्रदानसंज्ञा भवति । 'अभिन्नकर्तृकयोः पूर्वकालाद्' इति द्विवचनेनापि निर्देशे बहूनामपि पूर्वकालत्वात् क्त्वा भवति । 'सरूपाणामेकशेष एकविभक्तौ' इति बहुवचननिर्देशे द्वयोरप्येकशेषो भवति ॥

अपेक्षातोऽधिकारः ॥ ६५ ॥

लक्ष्येषु लक्षणप्रवृत्तावर्थितमपेक्षा । एकत्रोपात्तस्यान्यत्र व्यापारोऽधिकारः । सोऽपेक्षया हेतुभूतया भवति । यथा – अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्राक् प्रकृत्यविकारात् ॥

एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते ॥ ६६ ॥

यथा 'तेन रक्तं रागाद्' इत्येकयोगनिर्दिष्टानामपि 'चन्द्रवृत्ते नक्षत्रा युक्तः कालः' इत्यत्र तेनेत्येकदेशोऽनुवर्तते ॥

1. 'नां सह वा प्रवृत्तिः सह वा निवृत्तिः । एकदेशानिर्दिष्टानामप्ये' ख. पाठः.

चानुकृष्टमुत्तरत्र नानुवर्तते ॥ ६७ ॥

यथा 'वदः सुपि क्यप् च' इत्यत्र चानुकृष्टो यत् 'भुव' इत्यत्र नानुवर्तते ॥

क्वचिदनुवर्तते ॥ ६८ ॥

चानुकृष्टमपि क्वचिदुत्तरत्रानुवर्तते। यथा 'डाप् चोभाभ्याम्' इति चानुकृष्टो ङीप् 'टिड्ढाणञ् —' इत्यादावनुवर्तते ॥

अनन्तरस्य विधिः प्रतिषेधो वा ॥ ६९ ॥

भवति। विधिर्यथा 'सर्वनाम्नः स्मैस्मातौ' अनन्तरयोर्ङेङस्योर्भवतः, न व्यवहितयोष्टाङसोः। प्रतिषेधो यथा— 'युजेरसमासे' इति प्रतिषेधोऽनन्तरस्य नुमः। अश्वयुक् ॥

विशेषातिदिष्टः प्रकृतं न बाधते ॥ ७० ॥

विशेषेणातिदिष्टो विधिः प्रतिषेधो वा प्रकृतं न बाधते। विधिर्यथा — 'ऋना ङीप्' प्रकृतः 'सर्वतः ष्फो वा' इत्यनेन विशेषातिदिष्टेन विधिना न बाध्यते, 'वयस्यचरम' इत्यादावनुवर्तते। प्रतिषेधो यथा — स एव ङीप् 'न स्वस्रादिभ्य' इति प्रतिषेधेन विशेषातिदिष्टेन न बाध्यत इति 'टिड्ढाणञ्—' इत्यादावनुवर्तते। एवं सर्वत्रापेक्षातोऽधिकारान्निवृत्तिश्चानुवृत्तिश्च भवति ॥

अर्थवशाद् विभक्तिविपरिणामः ॥ ७१ ॥

सामर्थ्यवशाद् विभक्त्यन्तरस्य विपरिणामः पूर्वविभक्तिपरित्यागेन विभक्त्यन्तरोपादानं भवति। आर्धधातुक इति सप्तम्यनुवृत्ता 'वलादेरिट्' इत्यत्र षष्ठ्यन्ततया विपरिणमते। 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः ट्युः' इति प्रथमान्तं तुडागमापेक्षया षष्ठ्या विपरिणम्यते ॥

समर्थः पदविधिः ॥ ७२ ॥

विधीयत इति विधिः। सम्बन्धसामान्ये षष्ठी। तेन यः पदाद्विधिः यश्च पदे पदस्य पदयोः पदानां वा, सर्वतः पदस्य सम्बन्धीति पदविधिरेव समर्थ इति। यदा सम्प्रेक्षितार्थः सम्बद्धार्थो

वा समर्थः, तदा व्यपेक्षासामर्थ्यम्। यदा तु सङ्गतार्थः संसृष्टार्थो वा समर्थः, तदैकार्थीभाव इति। तत्र व्यपेक्षायां सम्प्रेक्षितार्थावयवत्वात् सम्बद्धार्थावयवत्वाद्वा समासादिः समर्थ इत्युक्तः। इह शास्त्रे पदविधिर्नाम समर्थावयवो वेदितव्यः। अयमर्थः — येषां पदानां विधिरुच्यते, तानि यदि परस्परं सम्प्रेक्षितार्थानि सम्बद्धार्थानि वा भवन्ति, तदासौ विधिः साधुर्भवति। यदा त्वेकार्थीभावस्तदा विग्रहवाक्याभिधाने यः शब्दः सङ्गतार्थः संसृष्टार्थो वा स साधुर्भवति। पदविधिश्च समाससुब्धातुकृत्तद्धितोपपदविभक्तियुष्मदस्मदादेशनिघातप्लुताः। तत्र समासः— 'विशेषणं विशेष्येण—'। नीलं च तदुत्पलं च नीलोत्पलम्। 'द्वितीया श्रितादिभिः'। कष्टं श्रितः कष्टश्रितः। 'षष्ठी सुबन्तेन'। राज्ञः पुरुषो राजपुरुषः। अत्र पूर्वोत्तरयोर्वाक्यावस्थायां सर्वत्र परस्परसाकाङ्क्षा व्यपेक्षास्ति। वृत्त्यवस्थायां तु पृथगर्थानां सतामेकार्थीभाव इति। तथाहि — नीलमिति विशेषणं गुणत्वाद् द्रव्यमाकाङ्क्षति। उत्पलमिति सर्वोत्पलावग्रहरूपेण प्रवृत्तं तद् विशेष्यत्वाद् विशेषणं गुणमाकाङ्क्षति। वृत्तौ पुनः एकार्थीभावेन पांसूदकवदविभागापत्तौ तावुभावप्येकस्मिन्नधिकरणे सम्मूर्छिताविव भवतः। तथा कष्टमित्येतत् साधनत्वात् साध्यभूतां क्रियामपेक्षते। श्रितः श्रयणक्रियोपसर्जनकर्तृवा(चिस्थ ? ची स्व)क्रियाविषयं साधनमपेक्षते। तयोश्च परस्परसंसर्गाद् वृत्तावेकार्थीभावो भवति। एवं सर्वत्रोपसर्जनानां प्रधानानां च परस्परमाकाङ्क्षावतां क्वचित् प्रकृतिविकारभावलक्षणः क्वचिदवध्यवधि°-द्भावात्मकः क्वचित् स्वस्वामिभावस्वभावः क्वचिद्विषयविषयिभावरूपः सम्ब-(न्धे ? न्धो) वा(च्ये ? क्ये) व्यपेक्षा। वृत्तावेकार्थीभावो भवति। तदेतत् सामर्थ्यं विशेषोक्तमपि लो(कव्य ? का)पेक्षया ? वृत्त्यवृत्त्योः स्वभावेन विभक्तमवतिष्ठते। समर्थ इति किम्। किमद्य ते वस्त्रं नीलमुत्पलमालि! कर्णे। सुब्धातुः। पुत्रमिच्छति पुत्रीयति। समर्थ इति किम्। पश्यति पुत्रम्, इच्छति सुखम्। कृत्। कुम्भं करोतीति कुम्भकारः। समर्थ इति किम्। पश्य कुम्भं, करोति कटम्। तद्धितः। उपगोरपत्यम् औपगवः। समर्थ इति किम्। गृहमुपगोरपत्यं देवदत्तस्य। उपपदविभक्तिः। अभिजानासि देवदत्त! काश्मीरेषु वत्स्यामः। समर्थ इति किम्। देवदत्त! मातरं स्मरसि, अवसाम दीर्घं मगधेषु। युष्मदस्मदादेशाः। ग्रामस्ते स्वम्, ग्रामो मे स्वम्। समर्थ

इति किम् । ओदनं पच तव भविष्यति मम भविष्यति । निघातः । देवदत्तः पचति, यज्ञदत्तो भुङ्क्ते । समर्थ इति किम् । अयं दण्डो हरानेन । प्लुतः । 'भर्त्सनेऽङ्गयुक्तं तिङाकाङ्क्षम्' । अङ्ग ! कूज ३, इदानीं ज्ञास्यसि जाल्म ! । समर्थ इति किम् । अङ्ग ! कूजत्ययम्, इदानीं ज्ञास्यति जाल्मः । पदग्रहणाद् वर्णविधिरसामर्थ्येऽपि भवति । तिष्ठतु तावद् दध्यशान त्वं शाकेन । तदेवं समासकृत्ताद्धितेषु वाक्ये व्यपेक्षा, वृत्तौ त्वेकार्थीभावः, शेषेषु पुनर्व्यपेक्षैव सामर्थ्यं भवति ॥

अर्थवद्ग्रहणे नानर्थकस्य ॥ ७३ ॥

सूत्रेषु शब्दस्यार्थवतो ग्रहणे सम्भवत्यनर्थकस्य ग्रहणं न भवति । त्रिग्रहणे सङ्ख्याशब्दस्यार्थवतो ग्रहणं, न रात्रिशब्दावयवस्य । श्वग्रहणे न मातरिश्वनः । यत्र त्वर्थवान्नास्ति, तत्रानर्थकस्य ग्रहणम् । यथा 'अव्यक्तानुकरणस्यानेकाचोऽत इतावि'त्यच्छब्दस्य । पटत् इति पटिति ॥

न वर्णानिनस्मन्ग्रहणेषु ॥ ७४ ॥

वर्ण अन् इन् अस् मन् इत्येतेषामुपादाने 'अर्थवद्ग्रहणे नानर्थकस्ये'त्येवं न भवति । वर्णग्रहणे 'अतो भिस ऐस्' यथा अर्थवतोऽतो भवति— कुम्भकारैः, एवमनर्थकादपि वृक्षैः । अन् । 'अल्लोपोऽनः' यथेह भवति राज्ञः, तथा महिम्ना । इन् । 'इन्हन्पूषार्यम्णां शौ च' यथेह भवति दण्डी, तथा वाग्मी । अस् । 'अत्वसन्तस्याधातोः सौ' यथेह भवति सुपयाः, एवं चन्द्रमाः । मन् । 'मनः' यथेह भवति दा(म ? मा) सीमा, एवमतिमहि(म्ना ? मा) ॥

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ७५ ॥

एको लक्षणेनाभिहितः, अपरः शास्त्र एव प्रतिनियतेन पदेन प्रतिपादितः । तयोर्ग्रहणसम्भवे प्रतिपदोक्तस्यैव ग्रहणं, नतु लाक्षणिकस्य । 'सन्लिटोर्जेः' जिगाय । जिनातेः सम्प्रसारणे जिरूपस्य लाक्षणिकत्वात् न भवति । जिज्यतुः ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ॥ ७६ ॥

प्रातिपदिकस्य ग्रहणे स्त्रीपुन्नपुंसकलिङ्गैर्विशिष्टस्यापि ग्रहणं भवति । *'तृतीया सदृशादिभिः' यथेह भवति पित्रा सदृशः पितृसदृशः, एवं पितृसदृशीत्यत्रापि । 'हस्त्यचित्तेभ्यष्ठक्' यथेह भवति हस्तिनां समूहो हास्तिकम्, एवं हस्तिनीनां समूहो हास्तिकमित्यत्रापि । द्विषतीताप इत्यादौ तु लिङ्गविशिष्टस्याग्रहणे तत्रैव प्रतिविधानं भविष्यति ॥

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ॥ ७७ ॥

धातोः स्वरूपग्रहणे यङ्लुगन्तस्यापि तस्य ग्रहणं भवति । 'भुवो वुग्लुङ्लिटोः' यथेह भवति अभूवन्, एवमबोभूवन् इत्यत्रापि । यथेह 'गमेरिट्' गमिष्यति, एवं जङ्गमिष्यति इत्यत्रापि ॥

न तिबनुबन्धगणैकाज्ग्रहणेषु ॥ ७८ ॥

तिपा अनुबन्धेन गणेन एकेनाचा च प्रकृतेर्निर्देशे यङ्लुगन्तस्य ग्रहणं न भवति । तिपा । 'निसस्तपतावनासेवायां' यथेह भवति निष्टपति, न तथा निस्तातपि । अनुबन्धेन । 'शीङ एत् सार्वधातुके' यथेह भवति शेते, एवं न शेशीतः । गणेन । 'कुटादीनामण्णिति' यथेह गुणनिषेधः कुटिता, न तथा चोकोटिता । एकेनाचा । 'हुझल्भ्योऽनिटो हेर्धिः' यथेह भवति जुहुधि, न तथा जोहुहि ॥

आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ७९ ॥

आगमा मिदादयो यस्याः प्रकृतेः प्रत्ययस्य वोपसर्जनभूता विधीयन्ते, तद्ग्रहणेन तेषामपि ग्रहणं भवति । देयात् । यासुटो लिङ्ग्रहणेन ग्रहणात् 'लिङ्येदि'त्येत्वं भवति । अदीदपत् । पुको धातुग्रहणेन ग्रहणात् णौ 'चङ्युपधाया' इति ह्रस्वो भवति । 'टकितावाद्यन्ता' वित्युक्तेऽपि आद्यन्तशब्दयोः समीपजयोरपि दर्शनात् प्रकृतिप्रत्ययग्रहणेन टित्कितोर्ग्रहणं न स्यादिति वचनम् ॥

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८० ॥

तस्य प्रकृतिप्रत्ययादेर्मध्यपतितस्य तत्प्रकृत्यादिग्रहणेनैव ग्रहणं भवति । उच्चकैः । सर्वके । तके । अत्राकचो मध्यगतस्य प्रकृतिग्रहणेन ग्रहणादव्ययसर्वनामसंज्ञायां सुब्लुक्त्यदाद्यत्वशीभावा भवन्ति ॥

---

* समासप्रकरणे तु 'अर्थादिसदृशसमतुल्याभिकेषु' इति सूत्रस्वरूपं दृश्यते ।

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८१ ॥

सन्निपातः संश्लेषः। तन्निमित्तो यो विधिः स तत्सन्निपातविघातकस्य विधेर्निमित्तं न भवति। त्रीणि। शतानि। अत्र जसः सन्निपातहेतुको नुं तत्सन्निपातविघातकस्य 'ष्णः सङ्ख्याया' इति जश्शसोर्लुको निमित्तं न भवति॥

न वर्णाश्रयप्रत्ययात्वपुगत्वेड्ह्रस्वत्वानि वर्णविचाल-पुग्घ्रस्वटाबाल्लोपसम्बुद्धिलोपानाम् ॥ ८२ ॥

वर्णाश्रयः प्रत्ययः आत्वं पुक् अत्वम् इट् ह्रस्वत्वं च सन्निपातलक्षण विषयो यथासङ्ख्यं वर्णविचालस्य पुकः ह्रस्वत्वस्य टापः आल्लोपस्य सम्बुद्धिलोपस्य च सन्निपातविघातस्य अनिमित्तानि न भवन्ति। वर्णाश्रयः प्रत्ययो वर्णविचालस्य। दाक्षिः। अकाराश्रय इञ् अकारविचालस्यानिमित्तं न भवति। आत्वं पुकः। क्षापयति। णिसन्निपातलक्षणमात्वं तद्विघातस्य पुकोऽनिमित्तं न भवति। पुक् ह्रस्वत्वस्य। अदीदपत्। आकारान्तसन्निपातनिमित्तः पुक् तद्विघातस्य ह्रस्वत्वस्यानिमित्तं न भवति। अत्वं टापः। या सा। त्यदाद्यकारष्टाब्विधेरनिमित्तं न भवति। इट् आल्लोपस्य। पपिवान्। आकारान्तलक्षण इड्विधिरालोपस्यानिमित्तं न भवति। ह्रस्वत्वं सम्बुद्धिलोपस्य। हे कुमारि!। ह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं न भवति। वृक्षायेत्यादौ त्वकारान्तनिमित्तो ङेर्यकारो यञीति प्रत्याहारानुवृत्तिसामर्थ्याद् दीर्घत्वस्यानिमित्तं न भवति॥

मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥ ८३ ॥

मतुपो विभक्तेश्च यदुदात्तत्वं पूर्वोदात्तसन्निपातहेतुकं, तत् पूर्वनिघातस्यानिमित्तं न भवति। अग्निमान्। वायुमान्। परमवाचा परमवाचे। अत्र 'ह्रस्वरेनुड्भ्योऽञ्मतुबि'ति मतुप्। 'उदात्तादुत्तरपदादनित्यसमासे वे'ति तृतीयाविभक्तेश्च पूर्वमुदात्तमाश्रित्योदात्तत्वं विधीयमानम् 'अनुदात्तं पदमेकवर्जमि'ति पूर्वनिघातस्यानिमित्तं न भवति॥

असिद्धं बहिरङ्गमन्तरङ्गे ॥ ८४ ॥

अङ्गं निमित्तमन्तर्यस्य तदन्तरङ्गं, बहिर्यस्य तद् बहिरङ्गम् । तत्र प्रकृत्याश्रयमन्तरङ्गं प्रत्ययाश्रयं बहिरङ्गम् । प्रकृतेः पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गम् । एकपदाश्रयमन्तरङ्गमुभयपदाश्रयं बहिरङ्गम् । अल्पाश्रयमन्तरङ्गं बह्वाश्रयं बहिरङ्गमिति । तत्रान्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं भवति । पद्व्या मृद्व्या । विशक्तिनिमित्तस्यैकारयणादेशस्य बहिरङ्गस्यासिद्धत्वात् अन्तरङ्गोकारस्य यणादेशो भवति । ग्रामणि कुलमिति । पदान्तरसम्बन्धनिमित्तत्वेन बहिरङ्गस्य नपुंसकह्रस्वत्वस्यासिद्धत्वात् एकपदाश्रयोऽन्तरङ्गस्तुङ् न भवति । युगपरत्रायेति । बहिरङ्गस्य दीर्घत्वस्यासिद्धत्वान्नपुंसकह्रस्वत्वं न भवति । एवमतिखट्वायाहीत्युपसर्जनह्रस्वत्वम्, अम्बात्रेति सम्बुद्धिह्रस्वत्वं च न भवति ॥

नाजानन्तर्ये ॥ ८५ ॥

अचोरानन्तर्यमाश्रित्य विधीयमाने विधौ 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येतन्न भवति । द्युभिः । अद्राक्षीत् । अवोचत् । दिव उत्त्वमसुमागमौ चान्तरङ्गेषु यणादिकार्येषु अचोरानन्तर्येण विधीयमानेषु असिद्धा न भवन्ति ॥

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥ ८६ ॥

गुणादागतो गौणः । मुखमिव प्राधान्यान्मुख्योऽर्थः । तयोर्गौणमुख्ययोरर्थयोरुपादानसम्भवे मुख्यार्थवृत्तेरेव शब्दस्य कार्यसम्प्रत्ययो भवति । 'वासुदेवार्जुनाभ्यां कन्' । वासुदेवे भक्तिरस्य वासुदेवकः । अर्जुनकः । यस्तु वासुदेव इव वासुदेवः, अर्जुन इवार्जुनः । तयोर्यथाप्राप्तमेव कार्यम् । 'ओदन्तो निपातः प्रगृह्यः' । अथो आश्चर्यम् । गौणार्थवृत्तेस्तु न भवति । अगोर्गौः समपद्यत गोभवदिति । इयं परिभाषा पदकार्येषु । तेन बाहिकं गामानयेत्यात्वं गौणार्थस्यापि भवति ॥

प्रसिद्धे सहचरिते च ॥ ८७ ॥

कार्यसम्प्रत्ययो भवति । प्रसिद्धे यथा—'शरदः श्राद्धे' ठञ्प्रत्ययान्तेन शारदिकमिति प्रसिद्धेः पितृकर्मैवोच्यते, नतु श्रद्धावान् । सहचरिते यथा—समयादिसाहचर्यादन्तरान्तरेणशब्दौ निपातौ गृह्येते । तेनेह न द्वितिया । नगरस्यान्तरा पुरीति । किं ते केशवार्जुनयोरन्तरेण ज्ञातेनेति ॥

कृत्रिमाकृत्रिमयोः कृत्रिमे ॥ ८८ ॥

करणेन निर्वृत्तं कृत्रिमं, ततोऽन्यदकृत्रिमम् । तयोः प्रसङ्गे कृत्रिमे कार्यसम्प्रत्ययो भवति । 'कर्मण्यण्' । अत्र 'कर्तुरीप्सिततमं कर्म' कृत्रिमम् । क्रिया पुनरकृत्रिमम् । तयोरीप्सिततमस्यैव सम्प्रत्ययः । कुम्भकारः । यत्र तूभयोः प्रसङ्गो नास्ति, तत्राकृत्रिमे(पि ? एव) । यथा — 'शब्दवैरकलहादिभ्यः करण' इत्यत्र करणशब्देन क्रियाया एव सम्प्रत्ययः ॥

क्वचिदुभयगतिः ॥ ८९ ॥

कृत्रिमाकृत्रिमयोरुभयोरपि क्वचित् प्रतिपत्तिर्भवति । 'बहुगणवतुडति सङ्ख्या' कृत्रिमा, एकादिका अकृत्रिमा । द्वयोरपि सम्प्रत्ययः । 'प्रकारे धा सङ्ख्यायाः' एकधा बहुधा ॥

सिद्धे सत्यारम्भो नियमार्थः ॥ ९० ॥

लक्षणान्तरेण कार्ये सिद्धे सति पुनस्तस्यैव कार्यस्य कस्मिंश्चिद्विशेषे यदारम्भः स विशेषान्तरे नियमार्थः व्यावृत्त्यर्थो भवति । 'शिसुट्यशीसम्बुद्ध्यो'रिति नान्तायाः प्रकृतेर्दीर्घे सिद्धे 'इन्हन्पूषार्यम्णां शौ चे'ति पुनरारभ्यमाणः शावेव सावेवेति नियमाय भवति । तेन दण्डीनि दण्डीत्यादावेव दीर्घो भवति, नतु दण्डिनौ दण्डिन इत्यादाविति ॥

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ॥ ९१ ॥

धातोः स्वरूपमुपादाय यत् कार्यं विधीयते, तत् धातुप्रत्यय एव भवति । 'मृजेर्वृद्धिः' । 'ऋतोऽचि वा' इहैव भवति परिमृज(ति ? न्ति) परिमार्ज(ति ? न्ति) । इह न भवति रज्जुमृजा रज्जुमृजे । 'अचि श्नुधातुभ्रुवां य्वोरियुवौ' यथेह भवतः चिक्रियतुः चिक्रियुः लुलुवतुः लुलुवुः, एवं यवक्रियौ यवक्रियः लुवौ लुव इति ॥

नञ्युक्तस्य तत्सदृशे ॥ ९२ ॥

नञ्युक्तस्य यत् कार्यमुच्यते तस्य नञ्युक्तसदृशे संविज्ञानं प्रतिपत्तिर्भवति । 'अप्राणिजातयः' समाहारे समस्यन्ते । तत्र प्राणिसदृशग्रहणाद्द्रव्यजातिव॥ चैनामेव समाहारे समासो भवति । अ राशब्रि धानाशष्कुलि ।

न गुणकर्मजातिवाचिनाम्। रसगन्धस्पर्शोत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानीति ॥

उक्तार्थानामप्रयोगः ॥ ९३ ॥

उक्तः अभिहितः अर्थो येषां शब्दानां शब्दान्तरेण तेषामप्रयोगोऽनुच्चारणं भवति। क्रियते कटः। कृतः कटः। शत्यः पटः। आरूढवानरो वृक्षः। तिङ्कृत्तद्धितसमासैः कर्मणोऽभिहितत्वात् कटादेर्द्वितीया न भवति। चित्रगुरिति बहुव्रीहिणोक्तत्वान्मत्वर्थस्य मतुप् न भवति। क्वचिदनित्यत्वमस्याः परिभाषायाः। तेन द्वावपूपावानय, त्वं पचसि, अहं पचामीत्यादौ द्वियुष्मदस्मदादीनामुक्तार्थानामपि प्रयोग उपपन्नो भवति ॥

निमित्ताभावे नैमित्तिकस्याप्यभावः ॥ ९४ ॥

निमित्तं करणं हेतुरित्यनर्थान्तरम्। तत्र भवं नैमित्तिकम्। निमित्ताभावे नैमित्तिकस्यापि कार्यस्याभावो भवति। चेकिरिता देदिविता। अत्र यङ्निमित्तदीर्घत्वमन्तरङ्गत्वात् पूर्वं कृतमपि पश्चादार्धधातुकनिमित्ते यलोपे कृते निमित्ताभावान्निवर्तते। एवं पपुषः पेचुषः। यस्येति सम्प्रसारणे कृते वलादित्वाभावादिण्णिवर्त्तते। स्थीयत इति षकारनिमित्तं ष्टुत्वं तदभावान्निवर्त्तते।

सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ॥ ९५ ॥

सन्नियोगः सहभावो यौगपद्यमिति यावत्। सन्नियोगशिष्टानामेकस्य सन्नियोगिनोऽपायेऽन्यतरस्याप्यपायो भवति। पञ्च इन्द्राण्यो देवता अस्य स्थालीपाकस्य पञ्चेन्द्रः स्थालीपाकः। अत्र ङीबानुक् च सन्नियोगशिष्टौ। तत्र 'द्विगोरनपत्येऽजादेर्लुगद्वि'रिति तद्धितस्य लुक्। 'लुक्तद्धितलुक्यगोणीसूच्यो'रिति ङीषोऽपि लुक्। तस्य निवृत्तौ तत्सन्नियोगशिष्टस्यानुकोऽपि निवृत्तिर्भवति ॥

नान्वाचीयमाननिवृत्तौ प्रधानस्य ॥ ९६ ॥

सन्नियोगशिष्टस्याप्यन्वाचीयमानस्य कार्यस्यापाये प्रधानस्यापायो न भवति। 'अव्ययानां कश्च द' इत्यकच्सन्नियोगे ककारस्य दकारोऽन्वाचीयते। पृथक्। (पृथकत्)। हिरुक्। (हिरकुत्)। दकाराभावेऽप्यकच् भवति। उच्चकैः। नीचकैः ॥

निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ९७ ॥

निरनुबन्ध(क)स्य प्रकृतिप्रत्ययादेर्ग्रहणे सानुबन्धकस्य ग्रहणं न भवति। 'पदान्ते दिव उदि'ति निरनुबन्धकस्य प्रातिपदिकस्य ग्रहणादु-दनुबन्धकस्य धातोर्ग्रहणं न भवति । अक्षद्यूः । 'क्षेः क्षी च' । अत्र हि 'क्षि(प् ? ष्) हिंसायामि'त्यस्य सानुबन्धकस्य ग्रहणं न भवति । क्षितः क्षितवानिति ॥

एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ॥ ९८ ॥

एकानुबन्धकस्य प्रत्ययादेर्ग्रहणे द्व्यनुबन्धकस्य ग्रहणं न भवति। 'सन्यङोराद्य एकाच् द्विः' । यङ्ग्रहणे क्यङ्ग्रहणं न भवति । श्येनायते । 'ययतोरतदर्थे' इति नञ्स्वरे 'शरीरावयवाद्यदि'ति यत एव ग्रहणं भवति। अदन्त्यम् । अकर्ण्यम् । ड्यतो ग्रहणं न भवति । अवामदेव्यम् ॥

नानुबन्धकृतान्यसारूप्यानेजन्तत्वानेकाल्त्वानि ॥ ९९ ॥

प्रत्ययधात्वादेशानामनुबन्धहेतुकान्यसारूप्यानेजन्तत्वानेकाल्त्वानि न भवन्ति। 'कृदसरूपोऽस्त्रियां वा बाधको भवती'त्युच्यते । ण्वुलादेरुत्सर्गस्यासरूपेण कादिनापवादेन समावेशो यथा स्यात् । विक्षिपः विक्षेपकः विक्षेप्तेति। तत्रानुबन्धभेदादसरूपस्य कादेरपवादस्य विषयेऽणादिरुत्सर्गः सरूपो मा भूदिति प्रतिषेधः क्रियते। गोदः कम्बलद इति। उपदेशे एजन्तस्य धातोरात्वमुच्यते, कै गै दो छो इत्याद्यर्थम् । तत्र धेट् देङ् मेङ् दैवादीनामनेजन्तानां तु न प्राप्नोतीति प्रतिषेध आरभ्यते । धाता । दाता । माता । अधिगातेति । अनेकालादेशः सर्वस्य स्थाने भवतीत्युच्यते 'अस्तेर्भूः' 'ब्रुवो वचि'रित्यादयोऽन्त्यस्य मा भूवन्निति। तत्र 'पदान्ते दिव उत्' । '(दिव) (ओ ? औ)त्' 'पथ्यादीनामात्' 'उरदि'त्यादयोऽनेकाल्त्वात् सर्वस्य स्युरिति प्रतिषेध आरभ्यते । द्युभ्याम् । द्यौः । पन्थाः । चकार इति ॥

समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि ॥ १०० ॥

समासान्तागमौ संज्ञाज्ञापकगण(नञ्)निर्दिष्टाश्च विधयोऽनित्या भवन्ति । समासान्तः। 'उपसर्गादध्वनः' प्राध्वो रथः । अ(स्य ? स्या)नित्यत्वादिदमपि भवति 'राज्ञः सुरा प्राध्वनि सन्निपेतुः' इति टच् न भवति । आगमः ।

'आने सुगतः' पचमानो यजमानः। अस्यानित्यत्वात् 'अपि शाकं पचानस्य गृहा वै मघवन्! सुखा' इत्यपि मुङ् न भवति। संज्ञा। काव्यं समस्यापूरणम्। समस्यत इति समस्या श्लोकपादः। सम्पूर्वादसेर्ण्यत्। संज्ञापूर्वकत्वाद् वृद्धिर्न भवति। तथा तुलयति स्म विलोचने। तुलेर्णिचि गुणो न भवति। ज्ञापकम्। 'दीर्घोऽनागमस्ये'त्यनागमग्रहणेनैतत् ज्ञाप्यते 'अभ्यासविकारेषु बाधका न बाधन्त' इति। अस्यानित्यत्वाद् विव्याध विव्या-(ध?च) इति सम्प्रसारणेन 'हलोऽनादेरप्रयोग' एव बाध्यत एव। गणः चुरादिभ्यो णिजुक्तः। तस्यानित्यत्वात् क्वचिन्न भवति। चुरा तुला। सहिरात्मनेपदगणे पठितः। तस्यानित्यत्वात् 'स एवायं नागः सहति कलभेभ्यः परिभवमि'ति परस्मैपदं भवति। नञ्। गुणेन षष्ठी न समस्यत इत्यस्यानित्यत्वात् वदनसौरभकुसुमसौकुमार्यादयो भवन्ति। तथा 'न लुमता प्रकृतेरि'त्यस्यानित्यत्वात् 'स्वमोर्नपुंसकादि'ति सोर्लुक्यपि हे वारे हे त्रपो इति सम्बुद्धिगुणो भवति॥

## उत्सर्गापवादयोरपवादो विधिर्बलवान्॥ १०१॥

सामान्योक्तो विधिरुत्सर्गः 'कर्मण्यणि'त्यादिः। विशेषोक्तो विधिरपवादः 'आतोऽनुपसर्गात् क' इत्यादिः। तयोरुत्सर्गापवादयोरपवादो विधिर्बलवान् उत्सर्गस्य बाधको भवति। गोदः। कम्बलदः। अणपवादः क एव भवति। प्राग् जितादणुत्सर्गः। 'अत इञ्' अपवादः। दाक्षिः। प्लाक्षिः। इञेव भवति॥

## अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः॥१०२॥

अपवादविषये क्वचिदुत्सर्गस्यापि समावेशो भवति। 'प्रदीयतां दाशरथाय मैथिली' इति इञ्विषयेऽप्यण् भवति। 'नाकुलिश्च शतानीकः'। अत्राणपवाद इञ्। 'वृद्धिवगिन् चिरणिगामिग्रहण'(?) इति। अपोऽपवादस्य विषये घञपि भवति। 'कण्ठे स्वयंग्राहनिषक्तबाहुम्' इति॥

## पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते॥ १०३॥

पुरस्तादपवादा अनन्तरानेवोत्सर्गविधीन् बाधन्ते, नतु तत्परेषामपि बाधका भवन्ति। 'श्लिष आलिङ्गन' इति क्सो विहितः। स शलदि-

सूत्रेण सिद्धः। पुनर्विधानात् बाधकानामपवादः पुष्यत्यादिविहि(तोनन्तर-श्रा? तस्यानन्तरस्याङ) एव बाधको भवति। आश्लिक्षत् कन्यां देवदत्तः। नतु चिणः। उपाश्लेषि कन्या देवदत्तेनेति ॥

मध्येऽपवादाः पूर्वान् ॥ १०४ ॥

द्वयोरुत्सर्गयोर्मध्ये येऽपवादा भवन्ति, ते पूर्वानेवोत्सर्गविधीन् बाधन्ते, न परान्। 'एरच्'। चयः जयः। पूर्वं घञमेव बाधते, नतु क्तिनम्। चितिः जितिः। 'ऋदोरप्'। करः लवः। पूर्वं घञमेव बाधते, नतु क्तिनम्। कीर्णिः लूनिः ॥

कृद्वासरूपोऽस्त्रियाम् ॥ १०५ ॥

कृत्संज्ञकोऽपवादः उत्सर्गेणासमानरूपः स्त्र्यधिकारविहितादन्यो बाधको वा भवति। ण्वुल्तृचावुत्सर्गौ। 'इगुपधज्ञाप्रीकिरः क' इत्यपवादः। तस्य विषये ण्वुल्तृचावपि। विक्षिपः विक्षेपकः विक्षेप्ता। कृदिति किम्। 'कर्तरि शबि'त्युत्सर्गः। 'दिवादिभ्यः श्यन्नि'त्यपवादः। स नित्यं बाधकः। दीव्यति। असरूप इति किम्। 'कर्मण्यणि'त्युत्सर्गः। 'आतोऽनुपसर्गे क' इत्यपवादः। स नित्यं बाधको भवति। गोदः कम्बलदः। अस्त्रियामिति किम्। 'स्त्रियां क्तिनि'त्युत्सर्गः। 'अ प्रत्ययादि'त्यपवादः। स नित्यं बाधको भवति। चिकीर्षा। जिहीर्षा ॥

यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ॥ १०६ ॥

यं विधिं प्रति विधीयमानस्योपदेशोऽनर्थको भवति, स एव विधिस्तेनोपदिश्यमानेन बाध्यते। यस्य तु विधेर्निमित्तमेवासावुपदिश्यमानस्तस्य तेन बाधा न भवति। यथा को देवता अस्य कायं हविः। 'कस्येदि'तीकारोऽन्तादेशो 'यस्ये'ति लोपं प्रत्यनर्थक इति तमेव बाधते। वृद्धेः पुनरसौ निमित्तमेवेति तां न बाधते ॥

येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः ॥ १०७ ॥

येन लक्षणेन नाप्राप्ते अपितु प्राप्त एव कार्ये यो विधिरारभ्यते, स तस्य बाधकः । येन प्राप्ते चाप्राप्ते चारभ्यते तस्य बाधको न भवति । अनडुद्भ्यां पपिवद्भ्यामिति । अनडुहो वसोश्च (ढ)त्वरुत्वयोः प्राप्तयोरेवारभ्यमाणं दत्वं तयोरेव बाधकं भवति । संयोगान्तलोपे पुनः प्राप्ते चाप्राप्ते चारभ्यत इति तन्न बाधते । अनड्वान् पपिवान् ॥

## बलवन्नित्यमनित्यात् ॥ १०८ ॥

अनित्याद् विधेर्नित्यविधिर्बलवान् भवति । कृताकृतप्रसङ्गी यो विधिः स नित्यः । यस्त्वकृत एव प्राप्नोत्यसावनित्यः । कृतेऽपि शब्दान्तरस्य प्राप्नुवन् अनित्यः । यस्य पुनर्लक्षणान्तरेण निमित्तं व्याहन्यते नासावनित्य इति । रन्धयति रन्धकः । अत्र कृतायामकृतायां च वृद्धौ नुम् प्राप्नोति इति नित्यः । वृद्धिस्तु कृते नुम्यनुपधात्वान्न प्राप्नोतीत्यनित्या । तत्र बलवत्त्वान्नित्यं नुम् भवति । कलयति । अत्राकृत एव टिलोपे वृद्धिः प्राप्नोतीत्यनित्या । टिलोपोऽप्यकृतायां वृद्धाविकारस्य प्राप्नोति, कृतायां त्वैकारस्येति शब्दान्तरप्राप्त्यानित्यः । तत्र द्वयोरनित्ययोः परत्वाद् वृद्ध्या भवितव्यमिति हलिकल्योरिकारस्यात्वमुच्यते । तेनाग्लोपिन्येव प्रकृतिरिति । अजहलत् अचकलदिति सन्वद्भावप्रतिषेधः । तद् ब्राह्म(ण)कुलमिति । त्यदाद्यत्वं लुकि कृते न प्राप्नोति । लुक् पुनर्यद्यपि त्यदाद्यत्वे कृते न प्राप्नोति, तथापि न त्यदाद्यत्वेनैव विहन्यते किन्तर्हि, लक्षणान्तरेण 'अतोऽम्' इत्यम्भावेनेति त्यदाद्यत्वं प्रत्यनित्यो न भवति । नित्यत्वे बलवत्त्वात् त्यदाद्यत्वं बाधते ॥

## अन्तरङ्गं बहिरङ्गात् ॥ १०९ ॥

बहिरङ्गादन्तरङ्गो विधिर्बलवान् भवति । स्योनः स्योमा । गुणश्च प्राप्नोति यणादेशश्च । अन्तरङ्गत्वाद् यणादेशो (न?) भवति । द्युघूषति । सन्यूठि कृते द्विर्वचनं च प्राप्नोति यणादेशश्च । अन्तरङ्गत्वाद् यणादेशः, पश्चाद् द्विर्वचनम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनेनैव स्योनस्योमादौ सिद्धे पुनरुच्यमानमिदमनित्यत्वं तस्या ज्ञापयति । तेन पपुषः पश्य चिच्युषः पश्य लु(लु? लू)वः पश्येति बहिरङ्गमपि वसोस्सम्प्रसारणमाल्लोपय(ण? ण्)वादेशेष्वन्तरङ्गेष्वसिद्धं न भवति ॥

## निरवकाशं सावकाशात् ॥ ११० ॥

निरवकाशं सावकाशाद् बलवद् भवति । वृक्षैः प्लक्षैः । 'बहुवचने झल्येदि'त्येत्वं वृक्षेभ्य इत्यादौ सावकाशम् । तद् ऐसादेशेन निरवकाशेन बाध्यते । न चायमेत्वस्यापवादः, भिन्नविषयत्वात् ॥

## वार्णात् प्राकृतम् ॥ १११ ॥

वर्णनिमित्ताद् विधेः प्रकृतिनिमित्तो विधिः बलवान् भवति । चयनं चायकः । अत्र गुणवृद्धिभ्यामन्तरङ्गत्वाद् यणादेशः प्राप्नोति । 'वार्णात् प्राकृतं बलीय' इति गुणवृद्धी भवतः ॥

## सम्प्रसारणं सम्प्रसारणाश्रयं च ॥ ११२ ॥

सम्प्रसारणं सम्प्रसारणाश्रयं चान्तरङ्गाद् बलवद् भवति । शुशावयिषति । अशूशवत् । श्वयतेर्णिचि संश्चङोः कृतयोरन्तरङ्गावपि वृद्ध्यावादेशौ बाधित्वा सम्प्रसारणं सम्प्रसारणाश्रयं च पूर्वरूपत्वं भवति ॥

## उपपदविभक्तेः कारकविभक्तिः ॥ ११३ ॥

उपपदविभक्तेः कारकविभक्तिर्बलीयसी भवति । नमस्यति देवान् । गां स्वामी व्रजति । ग्राममधिपतिर्याति । कर्मलक्षणा द्वितीयैव, न चतुर्थीषष्ठीसप्तम्यः ॥

## लुगन्तरङ्गेभ्यः ॥ ११४ ॥

अन्तरङ्गेभ्योऽपि विधिभ्यो लुग्विधिर्बलवान् भवति । गोमान् प्रियोऽस्य गोमत्प्रियः । गोमानिवाचरति गोमत्यते । अन्तरङ्गानपि दीर्घसंयोगान्तलोपादीन् बहिरङ्गोऽपि लुग् बाधते ।

## सर्वेभ्यो लोपः ॥ ११५ ॥

सर्वविधिभ्यो लोपविधिर्बलवान् भवति । अग्रहीत् । अत्र 'ग्रहेरस्यालिटि' दीर्घं बाधित्वा सिचो लोपो भवति । इतरथा हि नित्यत्वात् पूर्वं दीर्घे कृते इडुपधात्वाभावाद् (?) 'इट ईटी'ति सिज्लोपो न स्यात् ॥

## लोपादजादेशः ॥ ११६ ॥

लोपविधेरजादेशविधिर्बलवान् भवति । अध्यैष्ट । तत्र 'सिज्लोप एकादेशे सिद्धो वक्तव्य' इति । 'ह्रस्वादङ्गात्' इति सिज्लोपश्च प्राप्नोति । 'वृद्धिरेचि' इति वृद्धिश्च । '*सर्वविधिभ्यो लोप' इति वचनात् सिज्लोपः स्यात् । 'लोपादजादेश' इति वचनाद् वृद्धिर्भवति ॥

## आदेशादागमः ॥ ११७ ॥

आदेशविधेरागमविधिर्बलवान् भवति । आटतुः । आटुः । आसीत् । अरोदीत् । 'अहलैस्तिप्सिप' इति लोपादेशश्च प्राप्नोति । अटीटौ चागमौ । आदेशादागमो बलीयान् इति आगमौ भवतः ॥

## आगमात् सर्वादेशः ॥ ११८ ॥

आगमविधेः सर्वादेशविधिर्बलवान् भवति । जरसौ जरसः जरसि जरसाम् । अत्र जराशब्दात् जश्शस्टाप्सु कृतेषु जरसादेशश्च प्राप्नोति याण्नुटौ(?)चागमौ । 'आदेशादागम' इति याण्नुटौ स्याताम् । 'आगमात् सर्वादेश' इति वचनात् जरसादेशो भवति ॥

## विप्रतिषेधे परं कार्यम् ॥ ११९ ॥

विप्रतिपूर्वात् सिधेः कर्मव्यतीहारे घञ् । अन्योन्यप्रतिषेधो विप्रतिषेधः । स च विरोधिनोस्तुल्ययोर्युगपदुपस्थानादेकत्रानेकत्र वासम्भवे सति भवति । तस्मिन् विप्रतिषेधे यत् परं शास्त्रं तत् कर्तव्यम् । नित्यानित्यान्तरङ्गबहिरङ्गोत्सर्गापवादादिषु तुल्यबलता नास्तीति नायमस्य योगस्य विषयः । बलवत्तैव तत्र भवितव्यम् । तुल्यबलता चान्यत्र सावकाशयोर्भवति । तत्र 'अतो दीर्घो यञि' 'सुपि चे'त्यस्यावकाशः वृक्षाय वृक्षाभ्याम् । 'बहुवचने झल्येदि'त्यस्यावकाशः वृक्षेषु सर्वेषामिति । इहोभयं प्राप्नोति वृक्षेभ्यः । परत्वादेत्वं भवति । अयं तावदेकस्य द्विकार्ययोगे विप्रतिषेध उक्तः । अनेकस्याप्यसम्भवे यथा — 'अलोऽन्त्यस्ये'त्यस्यापवादस्य 'परस्यादिरि'त्यस्यावकाशः 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' । द्वीपम् अन्तरीपम् । 'अनेकाल् सर्वस्ये'त्यस्यावकाशः 'अस्तेर्भूः' भविता । इहोभयं प्राप्नोति । 'अतो भिस ऐस्' वृक्षैः प्लक्षैः । 'परत्वाद् 'अनेकाल् सर्वस्ये'त्येतद् भवति । अत्रादेरवय-

---

* 'पूर्वं सर्वेभ्यो लोप' इति तु सूत्रस्वरूपं दृश्यते ।

वस्य समुदायस्य च भेदान्नैको द्विकार्ययुक्तः । असम्भवस्त्वस्ति । आकृतौ पदार्थे सकृदेव समुदाये लक्ष्ये लक्षणं प्रवर्तते । विषयान्तरे च द्वयमपि चरितार्थमिति प्रतिषेधविषये द्वयोरप्रवृत्तौ आशायामनेन परं विधीयते, नतु पूर्वं प्रतिषिध्यते । व्यक्तौ तु पदार्थे प्रतिलक्ष्यं लक्षणस्य भेदात् पूर्वपरयोः पर्यायेण प्रवृत्तौ नियमार्थमिदं वचनं परमेव भवति नतु पूर्वमिति ॥

सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव [॥ १२० ॥

यथा भवतात् त्वं कुरुतात् त्वमिति 'हेर्लुक्' च प्राप्नोति । परत्वात् तातङ् । तस्य स्थानिवद्भावात् पुनर्लुक् च प्रवर्तते इत्ययमारम्भः ॥

पुनःप्रसङ्गविज्ञानात् सिद्धं भवति ॥ १२१ ॥

यथा ईजतुः ईजुरिति । परत्वात् सम्प्रसारणे कृते निमित्तसद्भावाद् द्विर्वचनं भवति । लक्ष्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादेतत्परिभाषाद्वयं 'विप्रतिषेधे परमि'त्यस्याः परिभाषायाः शेषभूतं विषयविभागेनावतिष्ठते ॥

क्वचित् पूर्वम् ॥ १२२ ॥

विप्रतिषेधे परमित्युक्तं, तस्यायमपवादः । क्वचिद्विषये पूर्वं कर्त्तव्यम् । ण्यादयोऽर्थविशेषलक्षणा अणपवादाः पूर्वविप्रतिषेधेन । 'दित्यदित्याण्ण्य' इत्यस्यावकाशः दितिर्देवता अस्य दैत्यः । 'इतोऽनिञ' इत्यस्यापवादस्य ढकोऽवकाशः दौलेयः दैतेयः । इहोभयं प्राप्नोति दितेरपत्यमिति । पूर्वविप्रतिषेधेन ण्य एव भवति दैत्यः । 'पत्युत्तरपदाण्ण्य' इत्यस्यावकाशः बार्हस्पत्यः । अचित्तलक्षणस्य ठकोऽवकाशः अपूपानां समूह आपूपिकम् । इहोभयं प्राप्नोति वनस्पतीनां समूहः । पूर्वविप्रतिषेधेन ण्य एव भवति ॥

नानिष्टार्था शास्त्रप्रवृत्तिः ॥ १२३ ॥

यः शब्दः शिष्टानां साधुत्वेन नेष्टः, तदर्था शास्त्रप्रवृत्तिर्न भवति । सिद्धानां हि लोकत एव साधुशब्दानां वर्णनीयमर्थान्वाख्यानं शास्त्रेण क्रियते । तेन सत्यपि सामान्योपदेशे सरति पचन्तीत्यादयो न भवन्ति ॥

१. 'ढम्' ख. पाठः

प्रकृतिवृत्तेः[1] पुनर्वृत्तावविधिर्निष्ठितस्य ॥ १२४ ॥

प्रकृतिवृत्तेः परिनिष्ठितस्य प्रयोगयोग्यतया परिसमाप्तस्य शब्दस्य पुनः शास्त्रान्तरप्रवृत्तौ क्रियमाणायामविधिर्भवति । यथा क्रियते ह्रियते इति तङादेशे कृते निष्ठितत्वात् 'दीर्घोऽकृत्सार्वधातुक' इति दीर्घो न भवति ॥

यावत्सम्भवस्तावद्विधिः क्वचिद् भवति ॥ १२५ ॥

यथा चिकीर्ष(ति ? न्ति) पुत्रीय(ती ? न्ती)ति । 'अतो गुण' इति पररूपशास्त्रं प्रवृत्तमपि पुनः प्रवर्तते ॥

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२६ ॥

यथा पर्जन्यो जलपूर्णं चाभिवर्षति, तथा लक्षणमसिद्धे सिद्धे च कार्ये क्वचित् प्रवर्तते । तेन पाण्ड्या भार्या अस्य पाण्ड्याभार्यः । प्राचीनाभार्यः । अत्र पाण्डोर्ड्यणि (त्रता ? प्राक्शब्दा)त् खञि च वृद्धयोरपि वृद्धौ कृतायां 'तद्धितोऽञ्वृद्धिहेतुररक्तविकार' इति पुंवद्भावप्रतिषेधः सिद्धो भवति ॥

अकृतकारि खल्वपि शास्त्रं क्वचिद् भवति ॥ १२७ ॥

यथा 'दीर्घोऽकृत्सार्वधातुक' इति ह्रस्वानामेव भवति, न दीर्घाणां, प्रयोजनाभावात् । नीयते लूयत इति ॥

कार्यकालं संज्ञापरिभाषम् ॥ १२८ ॥

संज्ञा च परिभाषा च पौर्वापर्यमनाश्रित्य कार्यकालं प्रवर्तते । संज्ञा यथा—कर्तृकर्मादिसंज्ञानां पौर्वापर्यमनाश्रित्य विवक्षातो व्यवस्था सम्भवति । वलाहकाद् विद्योतते वलाहकेन विद्योतते वलाहको विद्योतते इति । परिभाषा यथा— 'पूर्वत्रासिद्धमि'त्युक्तेऽपि तत्र ये सप्तमीपञ्चमीषष्ठीनिर्देशास्तेषां 'सप्तम्या निर्दिष्टे पूर्वस्ये'त्यादिषु परिभाषासु वर्तमानासु कार्यकाल उपस्थानात् पौर्वापर्यं नास्तीत्यसिद्धत्वं न भवति। तेन 'झलो झलि', 'ससजुषो रुरि'त्यादिषु ताः पुनः प्रवर्तन्ते ॥

यथोद्देशं संज्ञापरिभाषम् ॥ १२९ ॥

१. 'त्ते पु', २. '॰र्भ च । प्रसे' ख पाठः.

प्रवर्तते । संज्ञा यथा — कर्मकरणापादानाधिकरणसंज्ञानां यथोद्देशमाश्रित्यापादानसंज्ञा परत्वादधिकरणसंज्ञया बाध्यते । कांस्यपात्र्यां भुङ्क्ते । कर्मकरणसंज्ञाभ्यां च सैव पूर्वविप्रतिषेधेन बाध्यते । गां दोग्धि पयः । धनुषा विध्यति । परिभाषा यथा — 'परस्यादेरि'त्येषा 'शिदनेकाल् सर्वस्ये'त्यनया परत्वाद् बाध्यते । वृक्षैः प्लक्षैरिति ॥

प्रत्येकं वाक्यपरिसमाप्तिः ॥ १३० ॥

भवति । यथा वृद्धिसंज्ञायां गुणसंज्ञायां च । वासिष्ठः । ऐतिकायनः । औपगवः । कर्त्ता । चेता । स्तोता । अत्र वृद्धिसंज्ञा गुणसंज्ञा च प्रत्येकमादैचामदेङां च भवति ॥

समुदाये वाक्यपरिसमाप्तिः ॥ १३१ ॥

भवति । यथा 'हलो मिथः श्लिष्टाः संयोग' इति संयोगसंज्ञा हल्समुदाये भवति न प्रत्येकम् । तेन निर्यायात् निर्वायादिति 'संयोगादेरस्थ' इत्येत्वं न भवति ॥

व्याख्यानतो विशेषप्रतिपत्तिः ॥ १३२ ॥

भवति । यथा अण्ग्रहणेषु 'अण् ससवर्ण' इत्येकं वर्जयित्वा पूर्वेण णकारेण प्रत्याहारः । इण्ग्रहणेषु तु परेण । तेन गीर्षु धूर्ष्वित्यादौ 'इणः पर' इति षत्वं भवति । एवं पिबति अवधीदित्यदन्तता व्याख्यानात् । गुणवृद्धी न भवतः ॥

अभिधानलक्षणाः कृत्तद्धितसमासाः ॥ १३३ ॥

भवन्ति । कृत् यथा — आदित्यं पश्यति हिमवन्तं शृणोतीत्यादावनभिधानादण् न भवति । तद्धितो यथा — वृक्षमूलादागतः सेनया जयतीत्यादौ तद्धितो न भवति । समासः — रामो जामदग्न्यः अर्जुनः कार्त्तवीर्य इत्यादौ समासो न भवति ॥

प्रत्ययः परः ॥ १३४ ॥

सनादिरा कपः प्रत्ययसंज्ञक उक्तः । स यतो विधीयते ततः परो भवति । वक्ष्यति — 'तिजः क्षमायां सन्' तितिक्षते । 'धातोस्तव्यादयः'

कर्त्तव्यः करणीयः । 'प्रातिपदिकात् स्वादयोऽणादयश्च' वृक्षः वृक्षौ औपगवः गार्ग्य इति । पञ्चमीनिर्देशात् पूर्वः परो वेति सन्देहे पर एव यथा स्यादिति वचनम् । क्षमक(च्)रुड्बहुचस्तु विशेषविधानात् यथास्थानं भवन्ति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ।

### तिजः क्षमायां सन् ॥ १ ॥

तिजेर्धातोः क्षमायां वर्तमानात् सन्प्रत्ययो भवति । तितिक्षते । क्षमायामिति किम् । तेजनं तेजयति । नकारः 'सन्यङोरि'ति विशेषणार्थः ॥

### कितः संशयप्रतीकारयोः ॥ २ ॥

कित इत्येतस्माद् धातोः संशये प्रतीकारे च वर्तमानात् स्वार्थे सन्प्रत्ययो भवति । संशये विपूर्व एव वर्तते । विचिकित्सति । संशेत इत्यर्थः । व्याधिं चिकित्सति । संशयप्रतीकारयोरिति किम् । निकेतः सङ्केतः । केतयति ॥

### गुपो गर्हायाम् ॥ ३ ॥

गुपेर्गर्हायां सन्प्रत्ययो भवति । जुगुप्सते । गर्हायामिति किम् । गोपिता । गोपायति ॥

### बधेरेर्दीर्घश्च[1] ॥ ४ ॥

बधेर्गर्हायां गम्यमानायां सन्प्रत्ययो भवति । अभ्यासस्य चेत्वे कृते दीर्घः । बीभत्सते । गर्हायामित्येव । बाधते ॥

### मानो विचारणायाम् ॥ ५ ॥

---

1. 'ई' क, पाठः.

'मान पूजायाम्' । अस्माद्धातोर्विचारणायां वर्तमानात् स्वार्थे सन्-प्रत्ययोऽभ्यासेकारस्य च दीर्घो भवति । वाक्यानि मीमांसते विचारयतीति ॥

*शान्दानोर्वा ॥ ६ ॥

तुमर्हादिच्छायाम् ॥ ७ ॥

आशङ्कायां च ॥ ८ ॥

नेच्छासनः ॥ ९ ॥

सुपः कर्मणः काम्यच् ॥ १० ॥

अनव्ययादमः क्यज्वा ॥ ११ ॥

अधिकरणाच्चोपमानादाचारे ॥ १२ ॥

कर्तु... ....गल्भक्लीबहोढेभ्यो ङित् ॥ १३ ॥

क्यङ् ॥ १४ ॥

च्व्यर्थे भृशोत्सुकशीघ्रचपलपण्डिताण्डरकण्डरमेधाशुचिनीलहरितफेनमन्दमद्र(थ ? भ)द्रेभ्यः ॥ १५ ॥

संश्चत्तृपद्रेहद्देहद्वर्चसोजसां लोपश्च ॥ १६ ॥

उदाभिदुःसुभ्यो मनसः ॥ १७ ॥

डाज्लोहितजिह्मश्यामधूमचर्महर्षगर्वनर्मसुखदुःखमूर्च्छानिद्राकृपाकरुणादिभ्यः क्यष् ॥ १८ ॥

..........................................................................................

..........................................................................................

......कृपायति करुणायति । आदिग्रहणाद्यथादर्शनमन्येभ्योऽपि भवन्ति । षकारो 'वा क्यष' इति विशेषणार्थः । तेन पटपटायते लोहितायत इत्यादयो भवन्ति । धूमादीनां स्वतन्त्रार्थवृत्तीनां प्रकृतिविकारभावाप्रतीतेरभूततद्भावो नास्तीति मत्त्वर्थवृत्तीनां प्रत्ययो विज्ञायते । ककारः क्य इति सामान्यग्रहणार्थः ॥

* इत आरभ्य त्रयोदशसूत्राणां वृत्तिर्मातृकायां लुप्ता ।

तस्मै क्रामति कष्टकक्षसत्रगहनेभ्यः कल्कचिकीर्षायां क्यङ् ॥ १९ ॥

कष्टादिभ्यः चतुर्थीसमर्थेभ्यः क्रामतीत्यस्मिन्नर्थे क्यङ्प्रत्ययो भवति कल्कचिकीर्षायां पापचिकीर्षायां विषये । कष्टाय कर्मणे क्रामति कष्टायते । एवं कक्षायते सत्रायते गहनायते । कल्कचिकीर्षायामिति किम् । कष्टाय तपसे क्रामति । चतुर्थीनिर्देशः किम् । रिपुः कष्टं क्रामति ॥

तं वर्तयति रोमन्थाद्धनुचलने ॥ २० ॥

रोमन्थशब्दाद् द्वितीयासमर्थाद् वर्तयतीत्यस्मिन्नर्थे क्यङ्प्रत्ययो भवति यत्तद्वर्तनं हनुचलनविषयं चे(त्तं ?)द् भवति । रोमन्थायते गौः । हनुचलन इति किम् । कीटो रोमन्थं वर्तयति ॥

बाष्पोष्मफेनेभ्य उद्वमने ॥ २१ ॥

बाष्पादिभ्यो द्वितीयासमर्थेभ्य उद्वमने क्यङ् प्रत्ययो भवति । बाष्पायते ऊष्मायते फेनायते ॥

सुखदुःखतृप्रकृच्छ्रास्रालीककरुणकृपणसोढप्रतीपेभ्योऽनुभवे ॥ २२ ॥

स्वसम्बन्धिसुखादिज्ञानमनुभवः । तस्मिन्नर्थे द्वितीयासमर्थेभ्यः सुखादिभ्यः क्यङ्प्रत्ययो भवति । सुखमनुभवति सुखायते । दुःखायते । तृप्रायते । कृच्छ्रायते । अस्रायते । अलीकायते । करुणायते । कृपणायते । सोढायते प्रतीपायते । अनुभव इति किम् । सुखं वेदयति प्रसाधको देवदत्तस्य ॥

शब्दवैरकलहाभ्रकण्वमेघाटाट्टशीकासोटाकोटापोटाप्रुष्वाटाटसुदिनदुर्दिननीहारेभ्यः करणे ॥ २३ ॥

करण इति करोत्यर्थो निर्दिश्यते । तस्मिन्नर्थे शब्दादिभ्यो द्वितीयासमर्थेभ्यः क्यङ्प्रत्ययो भवति । शब्दं करोति शब्दायते । वैरायते । कल-

१. 'प्लुष्वाटा' ख. पाठः.

ह्रायते । अभ्रायते । कण्वायते । मेघायते । अटायते । अट्टायते । शीकायते । सोटायते । कोटायते । पोटायते । पुष्वायते । अटाटायते । सुदिनायते । दुर्दिनायते । नीहारायते । करण इति च 'धातोर्ह्लादे—रि'त्यतः प्रागाधिक्रियते ॥

तपसः क्यच् ॥ २४ ॥

तपश्शब्दाद् द्वितियासमर्थात् करणे क्यच्प्रत्ययो भवति । तपः करोति तपस्यति । तपःशब्दो यदा व्रतवचनस्तदान्तर्भूतकर्मकत्वात् क्यजन्तोऽकर्मकः । यदा सन्तापवचनस्तदा तत्सम्बन्धिनार्थेन सकर्मकः । शत्रूणां तपः करोति तपस्यति शत्रूनिति ॥

नमसः पूजायाम् ॥ २५ ॥

नमश्शब्दात् पूजायामर्थे वर्तमानाद् द्वितीयासमर्थात् करोतीत्यस्मिन्नर्थे क्यच्प्रत्ययो भवति । देवेभ्यो नमः करोति नमस्यति देवान् । पूजायामिति किम् । नमस्करोति ॥

वरिवसः परिचर्यायाम् ॥ २६ ॥

वरिवश्शब्दात् परिचर्यार्थवृत्तेर्द्वितीयासमर्थात् क्यच्प्रत्ययो भवति । गुरूणां वरिवः करोति वरिवस्यति गुरून् । परिचर्यायामिति किम् । अयं ते वरिवः करोति ॥

चित्रङ आश्चर्ये ॥ २७ ॥

चित्रङ्शब्दादाश्चर्यवृत्तेर्द्वितीयासमर्थात् करोत्यर्थे क्यच्प्रत्ययो भवति । प्रकृतौ ङकारनिपातनमात्मनेपदार्थम् । शब्दादिक्यङ्विधावस्याकरणमीत्वार्थम् । चित्रं करोति चित्रीयते । आश्चर्य इति किम् । चित्रं करोति चित्रीयति ॥

कण्डूञसुवल्गुमन्तुमहीङ्हृणीङ्वेङ्लाङ्वेड्लाड्लेड्लोड्रुषिरस्तिरोदुवसियसुषसिरञ्जिभषञ्जिभष्णुज्भ्यो यक् ॥ २८ ॥

कण्ड्वादिभ्यो द्वितीयासमर्थेभ्यः करोतीत्येतस्मिन्नर्थे यक्प्रत्ययो भवति । ञकारः 'फलवती'त्यात्मनेपदार्थः । ङकारो 'ङित' इति । कण्डूं करोति कण्डूयति कण्डूयते । असूयति । वल्गूयति । मन्तूयति । महीयते । हृणीयते । वेयते । लायते । वेड्यति । लाड्यति । केचित् समस्तादिच्छन्ति । वेड्लाड्यति । लेड्यति । लोड्यति । उरुष्यति । इरस्यति । तिरस्यति । दुवस्यति । इयस्यति । उषस्यति । इरज्यति । भिषज्यति । भिष्णुज्यति । 'णियकोरि'ति लुमता, लुप्ते प्रत्ययलक्षणप्रतिषेधात् पदान्तत्वाभावे रुत्वकुत्वादयो न भवन्ति । ककारो यकीति विशेषणार्थः ॥

**एलावेलाकेलाखेलामेधामगधेरधेषुधकुषुभसुखदुख-ः गद्गदागदतरणचरणचुरणोरणतुरणभुरणतन्तसपम्पसारर(म?)-समरसपरेभ्यश्च ॥ २९ ॥**

एलादिभ्यो द्वितीयासमर्थेभ्यः करोतीत्यस्मिन्नर्थे यक्प्रत्ययो भवति । एलां करोति एलायति । वेलायति । केलायति । खेलायति । मेधायति । मगध्यति । इरध्यति । इषुध्यति । कुषुभ्यति । सुख्यति । दुःख्यति । गद्गद्यति । (अगद्यति) । तरण्यति । चरण्यति । चुरण्यति । उरण्यति । तुरण्यति । भुरण्यति । तन्तस्यति । पम्पस्यति । अरर्यति । समर्यति । सपर्यति । अकारान्तानां 'यकी'त्यल्लोपः ॥

**धातोर्हलादेरेकाचः क्रियासमभिहारे यङ् ॥ ३० ॥**

क्रियासमभिहारः पौनःपुन्यं भृशार्थो वा । हलादिरेकाज् यो धातुः क्रियासमभिहारे वर्तते तस्माद् यङ्प्रत्ययो भवति । समभिहरणं समभिहारः स च मूर्तस्यानेकस्यैककालस्य भवति । पचादिधातुवाच्या च प्रधानक्रिया एका । अवयवक्रियाश्चाधिश्रयणादिका यद्यपि बह्व्यः, तथापि क्रमभावित्वात् क्षणिकत्वाद् अयुगपत्काला अमूर्ताश्चेति मुख्यसमभिहारो न सम्भवति । अतः प्रधानक्रियायाः विक्लेदादेः क्रियान्तराव्यवधानेनावृत्तिः पौनःपुन्यं, गुणक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवहितानां साकल्येन सम्पत्तिर्भृशार्थो वा बुद्धिकल्पनयोपचरितः समभिहार आश्रीयते । पुनः

पुनर्वा भृशं पचति पापच्यते । जाज्वल्यते । धातोरिति किम् । सोपसर्गादुत्पत्तिर्मा भूत् । प्राटति भृशम् । हलादेरिति किम् । भृशमीक्षते । एकाच इति किम् । भृशं जागर्ति । क्रियासमभिहार इति किम् । पचति । ङकार आत्मनेपदार्थः ॥

लुग् बहुलम् ॥ ३१ ॥

यङो बहुलं लुग् भवति । बहुलवचनं प्रयोगानुसारार्थम् । तेन सार्वधातुके विकल्पः । रोरवीति रोरूयते । लोलवीति लोलूयते । अचप्रत्यये नित्यम् । लोलुवः । पोपुवः । क्वचिन्न भवति लोलूया पोपूया । उत्तरत्राप्यनुवृत्त्यर्थयथादर्शनं जञ्जपीत्याद्यपि भवति । 'यङ्लुकः शब्लुक्'चेति परस्मैपदं भवति ॥

अटयर्तिसूत्रि[1]मूत्रि[2]सूच्यशूर्णु[3]भ्यः ॥ ३२ ॥

अट्यादिभ्यः क्रियासमभिहारे वर्तमानेभ्यो यङ्प्रत्ययो भवति । तत्राट्यर्त्यशूनामहलादित्वात् सूत्रमूत्रसूचीनामनेकाच्त्वादूर्णोतेरहलादित्वादनेकाच्त्वाच्चाप्राप्तो यङ् विधीयते । अत्यर्थं पुनःपुनर्वा अटति अटाट्यते । अरार्यते । सोसूत्र्यते । मोमूत्र्यते । सोसूच्यते । अशाश्यते । प्रोर्णोनूयते ॥

कौटिल्य एव गत्यर्थेभ्यः ॥ ३३ ॥

गत्यर्थेभ्यो धातुभ्यो हलादिभ्य एकाज्भ्यः कौटिल्य एव यङ्प्रत्ययो भवति । कुटिलं क्रामति चङ्क्रम्यते । दन्द्रम्यते । कौटिल्य एवेति किम् । भृशं क्रामतीति क्रियासमभिहारे न भवति ॥

लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥३४॥

एवेत्यनुवर्तते । तत् पूर्वमर्थेन सम्बद्धमिहापि तथैव सम्बध्यते । भावो धात्वर्थः तस्य गर्हा भावगर्हा । तस्यामेव वर्तमानेभ्यो लुपादिभ्यो यङ्प्रत्ययो भवति । गर्हितं लुम्पति लोलुप्यते । सासद्यते । चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । निजेगिल्यते । भावगर्हाया-

---

१, २. 'त्र' क. पाठः. ३. 'र्णो' ख. पाठः.

मिति किम् । साधु जपति । भावग्रहणं किम् । जपति वृषल इति साध-नगर्हायां मा भूत् । एवेत्येव । पुनःपुनर्भृशं वा लुम्पति कुटिलं चरतीत्यत्र न भवति ॥

न शुभरुचगृणातिभ्यः ॥ ३५ ॥

शुभादिभ्यः क्रियासमभिहारे यङ्प्रत्ययो न भवति । अत्यर्थं शोभते । अभीक्ष्णं रोचते । पुनःपुनर्गृणाति । गिरतेस्तु भावगर्हायामेवेति नियमान्न भवति ॥

चुरादिभ्यो णिच् ॥ ३६ ॥

चुरादिभ्यो धातुभ्यः स्वार्थे णिच् प्रत्ययो भवति । चोरयति । नाटयति । णकारो वृद्ध्यर्थः । चकारः सामान्यग्रहणाविघातार्थः ॥

सुपो धात्वर्थे बहुलमिष्ठवच्च ॥ ३७ ॥

सुबन्ताद्धात्वर्थे बहुलं णिच्प्रत्ययो भवति । इष्ठनीव चास्मिन् कार्याणि भवन्ति । मृदुं करोति म्रदयति । पटमाचष्टे पटयति । हस्तेनापाक्षिपति अपहस्तयति । मन्त्रयते । उपच्छन्दयति ॥

अथास्यैव प्रपञ्चः—

मुण्डमिश्रश्लक्ष्णलवणलघुपटुप्रभृतीनि करोति ॥३८॥

मुण्डादिभ्यो निर्देशादेव द्वितीयासमर्थेभ्यः करोतीत्यस्मिन्नर्थे णिच्प्रत्ययो भवति । इष्ठवच्च । मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । लघयति । पटयति । आदिग्रहणाद् व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति । द्वारस्योद्घाटं करोति द्वारमुद्घाटयति । त्रिलोकीं तिलकयतीत्यादि । अत्रोत्पन्ने प्रत्यये व्याकरणादीनां सम्बन्धो निवर्तते । ततः प्रत्ययान्तक्रियाव्याप्यत्वेन कर्मत्वं भवति । तेन द्वितीयैव भवति । ननु तपः करोति तपस्यतीत्यादिवत् कर्मणोऽन्तर्भूतत्वान्मुण्डिरकर्मकः प्राप्नोति । नैवम् । सामान्यकर्मान्तर्भूतं, विशेषकर्मणा सकर्मको भवति । मुण्डयति, कं, माणवकमिति । यद्येवं पुत्रीयतिरपि विशेषकर्मणा सकर्मकः प्राप्नोति । पुत्रीयति, कं, माणवकमिति । नैवं तथा । मुण्डयति माणवकमित्यादिवत्

पुत्रमिच्छति पुत्रीयतीत्यादाविच्छाक्यजन्ते विशेषकर्म न प्रयुज्यते, आचारक्यचा बुद्धेरपहृतत्वात् । तथा पुत्रीयति माणवकमित्युक्ते पुत्रमिवाचरति माणवकमिति प्रतीतिर्भवति नतु पुत्रमिच्छतीति । तदुक्तम्—

"सदपीच्छाक्यचः कर्म तदाचारक्यचा हृतम् ।
कौटिल्येनेव गत्यर्थाभ्यासो वृत्तौ न गम्यते ॥"

स्थूलादीनाचष्टे च ॥ ३९ ॥

स्थूलदूरयुवक्षिप्रक्षुद्रेभ्यो यथादर्शनमन्येभ्यश्च शब्देभ्यो द्वितीयासमर्थेभ्य आचष्टे चकारात् करोतीति चार्थे णिच्प्रत्ययो भवति । इष्ठनीव चास्मिन् कार्याणि भवन्ति । स्थूलं करोत्याचष्टे वा स्थवयति । एवं दवयति यवयति क्षेपयति क्षोदयतीत्यादयोऽपि यथादर्शनमवगन्तव्याः ॥

सत्यार्थवेदानामापुक् च ॥ ४० ॥

सत्य अर्थ वेद इत्येतेभ्यस्तत्करोति तदाचष्टे वेत्यस्मिन्नर्थे णिच्प्रत्ययो भवति आपुक् चैषामागमः । सत्यं करोत्याचष्टे वा सत्यापयति । अर्थापयति । वेदापयति । आपुको विधानसामर्थ्यादिष्ठवद्भावेन निवृत्तिर्न भवति ॥

श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च॥४१ ॥

श्वेताश्व अश्वतर गालोडित आह्वरक इत्येतेभ्यस्तत्करोति तदाचष्टे वेत्यस्मिन्नर्थे णिच्प्रत्ययो भवति । इष्ठवच्च। एतेषां च यथासङ्ख्यमश्वतरेतकलोपा भवन्ति । श्वेताश्वमाचष्टे करोति वा श्वेतयति । एवमश्वतरम् अश्वयति । गालोडितं गालोडयति । आह्वरयति । बहुलवचनात् णिङ् च भवति । श्वेतयते इत्यादि ॥

कृतत्वचवर्णान् गृह्णाति ॥ ४२ ॥

कृतादिभ्यो द्वितीयासमर्थेभ्यो गृह्णातीत्यस्मिन्नर्थे णिच्प्रत्ययो भवति । इष्ठवच्च । कृतं गृह्णाति कृतयति । त्वचयति । वर्णयति ॥

हलिकल्योरच्च ॥ ४३ ॥

---

१. 'आमाच' ख. पाठः.

हलिकलिभ्यां द्वितीयासमर्थाभ्यां गृह्णातीत्यस्मिन्नर्थे णिच्प्रत्ययो भवति इष्ठवच्च । अकारश्चैतयोरन्तादेशः । हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । अकारकरणं सन्वद्भावप्रतिषेधार्थम् । अजहलत् । अचकलत् । इकारस्य हि परत्वाद् वृद्धौ कृतायां टिलोपेऽप्यनग्लोपित्वात् सन्वद्भावः स्यात् । कृते त्वकारे यद्यपि परत्वात् टिलोपं बाधित्वा पूर्वं वृद्धिः, तथापि अगेव लुप्यत इति सन्वद्भावप्रतिषेधः सिद्धः ॥

व्रताद् भोजने तन्निवृत्तौ च ॥ ४४ ॥

व्रतशब्दाद् द्वितीयासमर्थाद् गृह्णातीत्यस्मिन्नर्थे णिच्प्रत्ययो भवति इष्ठवच्च । व्रतमिति शास्त्रिको नियमः । स भोजनविषयस्तन्निवृत्तिविषयो वा भवति । पय एव मया भोक्तव्यमिति व्रतं गृह्णाति पयो व्रतयति । वृषलान्नं मया न भोक्तव्यमिति व्रतं गृह्णाति वृषलान्नं व्रतयति ॥

रूपान्निध्याने ॥ ४५ ॥

रूपशब्दाद् द्वितीयासमर्थान्निध्याने णिच्प्रत्ययो भवति । रूपं निध्यायति निरूपयति ॥

पाशाद् विमोचने संयमने च ॥ ४६ ॥

पाशशब्दाद् विमोचने संयमने चार्थे यथासामर्थ्यं पञ्चम्यन्तात् तृतीयान्ताच्च णिच्प्रत्ययो भवति । पाशाद् विमोचयति विपाशयति । पाशेन संयच्छति सम्पाशयति ॥

तूस्ताद् विहनने ॥ ४७ ॥

तूस्तशब्दाद् विहनने णिज् भवति । वस्त्रस्य तूस्तानि विहन्ति वितूस्तयति वस्त्रम् ॥

लोम्नोऽनुमार्जने ॥ ४८ ॥

लोमशब्दाद् द्वितीयान्तादनुमार्ष्टीत्येतस्मिन्नर्थे णिज् भवति । लोमान्यनुमार्ष्टि अनुलोमयति ॥

वस्त्रात् समाच्छादने परिधाने च ॥ ४९ ॥

वस्त्रशब्दाद् द्वितीयान्तात् समाच्छादने परिधाने च णिज् भवति । वस्त्रं समाच्छादयति संवस्त्रयति । वस्त्रं परिदधाति परिवस्त्रयति ॥

तेनातिक्रामति ॥ ५० ॥

तेनेति तृतीयासमर्थादतिक्रामतीत्यस्मिन्नर्थे णिज् भवति। हस्तिनातिक्रामति अतिहस्तयति। अत्यश्वयति ॥

सेनावीणावर्मचूर्णतूलश्लोकवासोवासीभ्योऽभियानोपगानसन्नहनावध्वंसनावकोषणोपस्तवनोन्मोचनपरिच्छेदनेषु ॥ ५१ ॥

सेनादिभ्यस्तृतीयासमर्थेभ्यो यथासङ्ख्यमभियानादिष्वर्थेषु णिच्प्रत्ययो भवति। सेनया अभियाति अभिषेणयति। वीणयोपगायति उपवीणयति। वर्मणा सन्नह्यति संवर्मयति। चूर्णैरवध्वंसयति अवचूर्णयति। तूलैरव(पु ? कु)ष्णाति अवतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। वास उन्मोचयति उद्वासयति। वास्या परिच्छिनत्ति परिवासयति। निरूपयति विपाशयतीत्यादिषु उपसर्गस्य प्रत्ययार्थविशेषणत्वेऽपि 'ते प्राग्धातोरि'ति नियमाद्धातोरेव प्राक् प्रयोगो भवति ॥

अङ्गात् तन्निरस्यति ङित् ॥ ५२ ॥

अङ्गवाचिनः शब्दाद् द्वितीयासमर्थाद् निरस्यतीत्यस्मिन्नर्थे णिच्प्रत्ययो ङिद्भवति। हस्तौ निरस्यति हस्तयते। पादयते। ङिद्वचनमात्मनेपदार्थम् ॥

पुच्छादुदसने व्यसने पर्यसने च ॥ ५३ ॥

पुच्छशब्दाद् द्वितीयान्तादुदसनादिष्वर्थेषु णिच्प्रत्ययो ङिद्भवति। पुच्छमुदस्यति उत्पुच्छयते। व्यस्यति विपुच्छयते। पर्यस्यति परिपुच्छयते। यत्रानेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र तत्तत्क्रियाविशेषद्योतनाय तत्तदुपसर्गः। यथा सुमनायते दुर्मनायते। यत्रत्वेकविशेषणविशिष्टैव क्रिया प्रत्ययार्थस्तत्र सन्देहाभावादुपसर्गो न प्रयुज्यते। यथा श्येनायते बाष्पायत इति। संवर्मयतीत्यादौ विशिष्टक्रियाभिव्यक्त्यर्थम् उपसर्गः प्रयुक्तः। हस्तयते पादयत इत्यादौ क्रियाविषयसन्देहाभावादुपसर्गो न प्रयुक्तः ॥

भाण्डात् समाचयने ॥ ५४ ॥

भाण्डशब्दाद् द्वितीयासमर्थात् समाचिनोतीत्यस्मिन्नर्थे णिच् ङिद्भवति । भाण्डानि समाचिनोति संभाण्डयते ॥

चीवरादर्जने परिधाने च ॥ ५५ ॥

चीवरशब्दाद् द्वितीयान्तादर्जने परिधाने चार्थे णिच् ङिद् भवति । चीवरमर्जयति चीवरयते । समाच्छादयति परिदधाति वा संचीवरयते परिचीवरयते ॥

धातोर्हेतुव्यापारे ॥ ५६ ॥

स्वातन्त्र्येण क्रियायां प्रवृत्तस्य कर्तुः प्रयोजकोऽनुकूलो वा हेतुः, व्यापारः प्रेषणस्तत्समर्थाचरणादिस्तस्मिन्नभिधेये धातोर्णिच्प्रत्ययो भवति । कटं करोति कश्चित् । तं कुर्वन्तमन्यः प्रयुङ्क्ते कटं कारयति । भिक्षा वासयति । कारीषोऽग्निरध्यापयति । क्रियायामप्रवृत्तस्य प्रैषादौ न भवति । पृच्छतु मा भवानिति ॥

आख्यानात् कृतस्तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ ५७ ॥

आख्यायत इत्याख्यानमितिहासः कंसवधबलिबन्धादिः । तद्वाचिनः शब्दात् कृदन्तात् तदाचष्ट इत्यस्मिन्नर्थे णिच्प्रत्ययो भवति, तस्य च कृतो लुक्, तत्प्रकृतेश्चाविकृतायाः स्वरूपेणावस्थानं, कारकं च कंसादि प्रकृतिवत् कर्मभावमनुभवति । धात्वधिकाराच्चास्य धातुप्रत्ययत्वे अड्द्विर्वचनतत्त्वकुत्वादयो धातोर्भवन्ति । कंसवधमाचष्टे कंसं घातयति । बलिं बन्धयति । कंसवधमाख्यत् कंसमजीघतत् । बलिमबबन्धत् । प्रकृतिप्रत्यापत्त्या हन्तेर्वधादेशो निवर्तते ॥

क्रियान्वाख्यानाच्च ॥ ५८ ॥

क्रियान्वाख्यानं साम्प्रतिको राजागमनादिवृत्तान्तः । तद्वाचिनः शब्दात् कृदन्तात् तदाचष्ट इत्यस्मिन्नर्थे णिच्प्रत्ययो भवति । कृल्लुक् प्रकृ-

तिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । राजागमनमाचष्टे राजानमागमयति । राजागमनमाख्यत् राजानमाजिगमत् ॥

नाख्यानात् ॥ ५९ ॥

आख्यानादाख्यानान्ताच्च कृतस्तदाचष्ट इत्यस्मिन्नर्थे णिज् न भवति। आख्यानमाचष्टे, नलोपाख्यानमाचष्ट इति वाक्यमेव भवति ॥

दृश्यर्थायां च प्रवृत्तौ ॥ ६० ॥

दर्शनार्थायां चाख्यानप्रवृत्तौ कृदन्तात् तदाचष्ट इत्यस्मिन्नर्थे णिज् भवति । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । मृगरमणमाचष्टे मृगान् रमयति । रममाणान् मृगानन्यस्मै दर्शनार्थं वने कथयतीत्यर्थः । दृश्यर्थायामिति किम् । ग्रामे मृगरमणमाचष्टे ॥

आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ ६१ ॥

कालस्य स्वेन सम्बन्धिना कार्त्स्न्येन व्याप्तिरत्यन्तसंयोगः, तस्मिन् सति मर्यादायां गम्यमानायां कृदन्तात् तदाचष्ट इत्यस्मिन्नर्थे णिज् भवति । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । यश्च मर्यादायामाङ् तस्य लोपः । आरात्रविवासमाचष्टे रात्रिं विवासयति । केचिदाचष्ट इति नानुवर्तयन्ति । तेनेहापि भवति आरात्रविवासं जागर्ति रात्रिं विवासयति। आशर्वरीगमनमास्ते शर्वरीं गमयति ॥

चित्रीकरणे प्रापि ॥ ६२ ॥

चित्रीकरणमाश्चर्यं, तस्मिन् गम्यमाने कृदन्तात् प्राप्नोतीत्यस्मिन्नर्थे णिच्प्रत्ययो भवति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयति ॥

नक्षत्रयोगे ज्ञि ॥ ६३ ॥

नक्षत्रेण पुष्यादिना चन्द्रादेर्योगो नक्षत्रयोगः । तस्मिन् यत् कृदन्तं वर्तते ततस्तं जानातीत्यस्मिन्नर्थे णिज् भवति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयति ।

मघाभिः सूर्यं योजयति । पुष्यादेरकारकत्वान्न प्रकृतिवत् कर्मभावः । चन्द्रादेस्तु भवत्येव । 'आख्यानात् कृतस्तदाचष्ट' इत्यादिप्रकरणं 'धातोर्हेतुव्यापार' इत्यस्यैवौपचारिकः प्रपञ्चः । तथाहि कंसं घातयतीत्यादौ यदाह—

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥"

(वाक्य० ३. का० ७. स० ५. श्लो०)

उत्पत्तेः प्रभृत्या विनाशात् (समृ? स्वबु)द्धीराचक्षाणः परानपि तथैव प्रत्याययति । तथाहि वक्तारो भवन्ति गच्छ हन्यते कंसः, घानिष्यते कंसः, किं गतेन हतः कंस इति । एवं च रात्रिं विवासयतीत्यादौ औपचारिकत्वमप्यूह्यम् ॥

## गुपूधूपविच्छिपणिपनिभ्य आयो वा ॥ ६४ ॥

गुपादिभ्यो धातुभ्य आयप्रत्ययो वा भवति । स चानिर्दिष्टार्थत्वात् स्वार्थे भवति । गोपायिता । गोपिता गोप्ता । धूपायिता । धूपिता । विच्छायिता । विच्छिता । पणायिता । पणिता । पनायिता । पनिता । पनिसाहचर्यात् पणिः स्तुत्यर्थो गृह्यते न व्यवहारार्थः । तेनेह न भवति शतस्य पणिष्यते ॥

## ऋतेरीयङ् ॥ ६५ ॥

ऋतिः सौत्रो धातुः पणायां गतौ च वर्तते । ततः स्वार्थे ईयङ्प्रत्ययो भवति । ऋतीयिता अर्तिता । ङकार आत्मनेपदार्थः । ऋतीयिष्यते अर्तिष्यते ॥

## कमेर्णिङ् ॥ ६६ ॥

कमेर्धातोः स्वार्थे णिङ्प्रत्ययो भवति । णकारो वृद्ध्यर्थः । ङकार आत्मनेपदार्थः । काम(यते? यिता) कमिता । कमिष्यते कामयिष्यते ॥

## नित्यं शिल्पायादयः ॥ ६७ ॥

शितिप्रत्यये परतो गुपादिभ्यो धातुभ्यो नित्यमायीयङ्णिङः प्रत्ययाः भवन्ति । गोपायति । धूपायति । विच्छायति । पणायति । पनायति । ऋतीयते । कामयते । एते सनमारभ्य णिङ्पर्यन्ताः प्रत्ययाः । यदन्तानां 'सनाद्यन्तश्चाणिङ' इति धातुसंज्ञा भवन्ति ॥

अनेकाचो लिट आं कृभ्वस्तीनां च लिट्यनुप्रयोगः ॥ ६८ ॥

अनेकाचो धातोः परस्य लिट आमादेशो भवति । कृभ्वस्तीनां च (यः ?) लिट्पराणाम् आमन्तात् परः अनन्तरः प्रयोगो भवति । चकासाञ्चकार । चुलुम्पाञ्चकार । चिकीर्षाम्बभूव । लोलूयामास । अनेकाच इति किम् । पपाच ॥

इजादेर्गुरुमतोऽनृच्छूर्णोः ॥ ६९ ॥

इजादिर्यो धातुर्नित्यं गुरुमानृच्छूर्णोतिवर्जितस्ततः परस्य लिट आमादेशो भवति । कृभ्वस्तीनां च लिट्पराणामनुप्रयोगः । ईक्षाञ्चक्रे । ऊहाञ्चक्रे । उक्षाञ्चकार । इजादेरिति किम् । ततक्ष । गुरुमत इति किम् । इयेष । नैष लविधाने गुरुमान् । अनृच्छूर्णोरिति किम् । आनर्च्छ । प्रोर्णुनाव । ऋच्छेस्तु उपदेश एव गुर्भवतीति प्रतिषेध आरभ्यते ॥

दयायास्कास्भ्यश्च ॥ ७० ॥

दय अय आस् कास् इत्येतेभ्यः परस्य लिट आमादेशो भवति । कृभ्वस्तीनां च लिट्पराणामनुप्रयोगः । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे । कासाञ्चक्रे ॥

जागृुषो वा ॥ ७१ ॥

जागृ उष इत्येताभ्यां परस्य लिट आमादेशो वा भवति । कृञादीनां च लिट्पराणामनुप्रयोगः । जागराञ्चकार जजागार । ओषाञ्चकार उवोष ॥

भीह्रीभृहुवां श्लुवच्च ॥ ७२ ॥

बिभेत्यादीनां परस्य लिट आमादेशो वा भवति । कृञादीनां च लिट्पराणामनुप्रयोगः । श्लुवच्चास्मिन् द्विर्वचनादीनि भवन्ति । बिभया-

ञ्चकार बिभाय। जिह्रयाञ्चकार जिह्राय। बिभराञ्चकार बभार। जुहवाञ्चकार जुहाव। तिबादिषु प्राप्तेष्वारम्भात् अपवादो लिट एव भवति। तेन बिभयाञ्चकारेत्यादौ वृद्धिः बिभराञ्चक्रतुरित्यादौ गुणप्रतिषेधश्च न भवति। पदत्वं तु स्थानिवद्भावेन कृदन्तत्वात् सुबन्तत्वे सति भवति॥

विदेः किच्च॥ ७३॥

विदेः परस्य लिट आमादेशो वा भवति। स च किद् भवति। कृञादीनां च लिट्पराणामनुप्रयोगः। विदाञ्चकार विवेद। किद्वचनं गुणप्रतिषेधार्थम्॥

लोटः कृञश्च लोट्यनुप्रयोगः॥ ७४॥

विदेः परस्य लोटः किदामादेशो भवति। लोट्परस्य तु कृञोऽनुप्रयोगः। विदाङ्करोतु विदाङ्कुरुताम्। वेत्तु वित्तां विदन्तु॥

स्यतासी लृलुटोः॥ ७५॥

लृ इति लृङ्लृटोरुत्सृष्टानुबन्धयोः सामान्यग्रहणम्। तस्मिन् लुटि च परतो धातोर्यथासङ्ख्यं स्यतासीप्रत्ययौ भवतः। करिष्यति अकरिष्यत्। श्वः कर्त्ता॥

लुङि सिच्॥ ७६॥

धातोर्लुङि परतः सिच्प्रत्ययो भवति। अकार्षीत्। अपाक्षीत्। इकारः 'सिचि परस्मैपदेष्वि'ति विशेषणार्थः। चकार आगमानुदात्तस्वरबाधनार्थः। मा हि लावीत्। मा हि पाचीत्॥

स्पृशिमृशिकृषितृपिदृपिभ्यो वा॥ ७७॥

स्पृशादिभ्यो लुङि परतः सिच्प्रत्ययो वा भवति। अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। अम्राक्षीत् अमार्क्षीत् अमृक्षत्। अक्राक्षीत् अकार्क्षीत् अकृक्षत्। अत्राप्सीत् अतार्प्सीत् अतृपत्। अद्राप्सीत् अदार्प्सीत् अदृपत्। सिच्पक्षे स्पृशादीनां विकल्पेनामागमविधानात् त्रैरूप्यं भवति॥

दाधागातिपिबतिस्थाभूभ्यः परस्मैपदे लुक्॥ ७८॥

दादिभ्यः परस्य सिचः परस्मैपदे लुग् भवति । अदात् । अधात् । अगात् । अपात् । अस्थात् । अभूत् । गातिपिबतिनिर्देशात् गायतेः पातेश्च न भवति । अगासीन्नटः । अपासीन्नृपः । परस्मैपद इति किम् । अदिषातां ग्रामौ देवदत्तेन ॥

शाच्छासाघ्राधेड्भ्यो वा ॥ ७९ ॥

शादिभ्यः परस्य सिचः परस्मैपदे वा लुग् भवति । अशात् अशासीत् । अच्छात् अच्छासीत् । असात् असासीत् । अघ्रात् अघ्रासीत् । अधात् अधासीत् । परस्मैपदे इत्येव । आघ्रासातां सुमनसौ देवदत्तेन ॥

तनादिभ्यस्तथासोः ॥ ८० ॥

तनादिभ्यः परस्य सिचः तथासोः परतो वा लुग् भवति । अतत अतथाः । अतनिष्ट अतनिष्ठाः । अ(स ? सा)त अ(स ? सा)थाः । असनिष्ट असनिष्ठाः । थासा साहचर्यादात्मनेपदैकवचनस्य तशब्दस्य ग्रहणम् । तेनेह न भवति अतनिष्ट यूयम् । करोतेरलुक्पक्षेऽपि 'ह्रस्वादि'ति सिचो लोपः । अकृत अकृथाः ॥

शल इगुपधादहशोऽनिटः क्सः ॥ ८१ ॥

शलन्तादिगुपधाद् दृशिवर्जितादनिटो धातोर्लुङि परतः क्सप्रत्ययो भवति । सिचोऽपवादः । अलिक्षत् । अदुक्षत् । अधुक्षत् । शल इति किम् । अभैत्सीत् । इगुपधादिति किम् । अधाक्षीत् । अदृश इति किम् । अद्राक्षीत् अदर्शत् । अनिट इति किम् । अकोषीत् । विकल्पितेटस्तु इट्पक्षे न भवति । अन्यत्र तु भवत्येव । न्यगूहीत् । न्यघुक्षत् ॥

श्लिषः ॥ ८२ ॥

श्लिषेर्धातोरनिटो लुङि परतः क्सप्रत्ययो भवति । आश्लिक्षत् कन्यां देवदत्तः । व्यत्यश्लिक्षन्त मिथुनानि । पुनर्विधानात् पुष्यत्यादिविहितमङं बाधते । अनिट इत्येव । 'श्लिष दाहे' इत्यस्मात् सेटो मा भूत् । अश्लेषीत् अधाक्षीदित्यर्थः ॥

नासत्त्वाश्लेषे ॥ ८३ ॥

श्लिषेर्धातोरप्राण्यालिङ्गने वर्तमानात् क्सप्रत्ययो न भवति । उपाश्लिषत् जतु च काष्ठं च । व्यत्याश्लिषन्त काष्ठानि ॥

णिश्रिद्रुस्रुकमिभ्यः कर्तरि चङ् ॥ ८४ ॥

(ण्यन्तेभ्यः) श्रिद्रुस्रुकमीत्येतेभ्यश्च धातुभ्यः कर्तरि यो लुङ् तस्मिन् परतश्चङ्प्रत्ययो भवति । अचीकरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । अचकमत । कर्तरीति किम् । अकारयिषातां कटौ देवदत्तेन । चकार-'श्चङी'ति विशेषणार्थः । ङकारो ङित्कार्यार्थः ॥

धेट्श्विभ्यां वा ॥ ८५ ॥

धेट्श्विभ्यां कर्तृवाचिनि लुङि परतश्चङ्प्रत्ययो वा भवति । अदधत् अधात् । अशिश्वियत् अश्वत् अश्वयीत् । कर्तरीत्येव । अधिषातां गावौ वत्सेन ॥

शास्यसुख्यावचिभ्योऽङ् ॥ ८६ ॥

शास्त्यादिभ्यः कर्तृवाचिनि लुङि परतोऽङ्प्रत्ययो भवति । अशिषत् । आस्थत् पर्यास्थत । आख्यत् आख्यत । अवोचत् अवोचत । कर्तरीत्येव । अशासिषातां शिष्यौ गुरुणा । अस्यतेः पुष्यत्यादित्वादेवाङि सिद्धे वचनमात्मनेपदार्थम् ॥

ऋसृभ्यां वा ॥ ८७ ॥

ऋसृभ्यां धातुभ्यां लुङि परतोऽङ् वा भवति । आरत् आर्षीत् । असरत् असार्षीत् ॥

लिपिसिचिह्वयतिभ्यः ॥ ८८ ॥

लिप्यादिभ्यः कर्तृवाचिनि लुङि परतोऽङ्प्रत्ययो भवति । अलिपत् । असिचत् । आह्वत् ॥

आत्मनेपदे वा ॥ ८९ ॥

लिप्यादिभ्यः कर्तृवाचिनि लुङि आत्मनेपदे परतः अङ् वा भवति । आलिपत अलिप्त । असिचत असिक्त । आह्वत आह्वास्त ॥

ऌदिद्द्युतादिपुष्यत्यादिभ्यः परस्मैपदे ॥ ९० ॥

ऌदिद्भ्यो धातुभ्यो द्युतादिभ्यः पुष्यत्यादिभ्यश्च परस्मैपदप्रकृतौ लुङि परतः अङ्प्रत्ययो भवति। अगमत्। असृपत्। अद्युतत्। अश्वितत्। अपुषत्। अ(सू ? शु)षत्। परस्मैपद इति किम्। व्यद्योतिष्ठ। श्यना निर्देशात् पोषतिपुष्णात्योर्न भवति। अपोषीत्। अपोषीत् ॥

इरिज्जॄश्विस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुभ्यो वा ॥ ९१ ॥

इरिद्भ्यो धातुभ्यो जॄइत्यादिभ्यश्च परस्मैपदप्रकृतौ लुङि परतोऽङ्-प्रत्ययो वा भवति। अरुधत् अरौत्सीत्। अजरत् अजारीत्। अश्वत् अश्वयीत् अशिश्वियत्। अस्तभत् अस्तम्भीत्। अम्रुचत् अम्रोचीत्। अम्लुचत् अम्लोचीत्। अग्रुचत् अग्रोचीत्। अग्लुचत् अग्लोचीत्। न्यग्लुचत् न्यग्लुञ्चीत्। परस्मैपद इत्येव। अरुद्ध अभित्त ॥

पदस्ते च्चिण् तलुक् च ॥ ९२ ॥

'पदगतावि'त्यस्माद्धातोः कर्तृवाचिनि लुङि तभूते परतश्चिणप्रत्ययो भवति। तप्रत्ययस्य लुक् च। उदपादि भैक्षम्। समपादि सस्यम्। त इति पदेरात्मनेपदित्वात् तत्प्रथमैकवचनं गृह्यते न परस्मैपदमध्यम-पुरुषबहुवचनम्। त इति किम्। उदपत्साताम्। चकार'श्चिणणमुलोर्दीर्घ-श्चे'ति विशेषणार्थः। णकारो वृद्ध्यर्थः ॥

सृजः श्रद्धावति ॥ ९३ ॥

सृजेर्धातोः श्रद्धावति कर्तरि यो लुङ् तस्मिंस्तभूते परतश्चिण्-प्रत्ययो भवति, तस्य च लुक्। असर्जि मालां धार्मिकः। श्रद्धावतीति किम्। स्रजौ मिथुनं व्यत्यसृष्ट ॥

दीपजनबुधपूरितायिप्यायिभ्यो वा ॥ ९४ ॥

दीपादिभ्यः कर्तृवाचिनि लुङि तभूते परतश्चिण् वा भवति। त-शब्दस्य च लुक्। अदीपि अदीपिष्ट। अजनि अजनिष्ट। अबोधि अबुद्ध। अपूरि अपूरिष्ट। अतायि अतायिष्ट। अप्यायि अप्यायिष्ट ॥

अचः कर्मकर्तरि ॥ ९५ ॥

अजन्तात् कर्मकर्तरि यो लुङ् तस्मिंस्तभूते परतश्चिण्प्रत्ययो वा भवति । तलुक् च । अकारि कटः स्वयमेव । अकृत कटः स्वयमेव । एवम् अहावि हविः अहोष्ट हविः । अच इति किम् । अभेदि काष्ठं स्वयमेव । कर्मकर्तरि इति किम् । अकारि कटो देवदत्तेन ॥

दुहश्च ॥ ९६ ॥

दुहेर्धातोः कर्मकर्तृवाचिनि लुङि तभूते परतश्चिण्प्रत्ययो वा भवति तलुक् च । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । कर्मकर्तरीत्येव । अदुग्ध गौर्गोपालकेन ॥

शेषेभ्यो नित्यम् ॥ ९७ ॥

अजन्तदुहौ वर्जयित्वा शेषेभ्यो धातुभ्यः कर्मकर्तृवाचिनि लुङि तभूते परतश्चिणप्रत्ययो नित्यं भवति । तलुक् च । अभेदि काष्ठं स्वयमेव । अपाचि ओदनः स्वयमेव ॥

न कर्मयोगे ॥ ९८ ॥

कर्मणा सम्बन्धे सति कर्मकर्तरि चिण् न भवति । अदुग्ध गौः पयः स्वयमेव । 'दुहिपच्योः सकर्मकक्रियश्चे'ति कर्मकर्तृसंज्ञा । कर्मकर्तरीति किम् । अदोहि गौः पयो गोपालकेन ॥

रुधश्च ॥ ९९ ॥

रुधश्च कर्मकर्तरि चिण् न भवति । अरुद्ध गौः स्वयमेव । कर्मकर्तरीत्येव । अरोधि गौर्गोपालकेन ॥

भावकर्मणोः ॥ १०० ॥

भाववाचिनि लुङि तभूते परतो धातोश्चिणप्रत्ययो भवति । तलुक् च । आशि भवता । अशायि भवता । अकारि कटो देवदत्तेन । अपाचि ओदनः ॥

नानोस्तपः ॥ १०१ ॥

अनुपूर्वात् तपेर्भावे कर्मणि च कर्मकर्तरि च चिणप्रत्ययो न भवति । अन्वतप्त कितवेन । अन्ववातप्त कितवः पापेन कर्मणा । अन्ववातप्त कितवः स्वयमेव । अनोरिति किम् । अतापि पृथिवी राज्ञा ॥

सार्वधातुके यक् ॥ १०२ ॥

भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् विकरणप्रत्ययो भवति । अस्यते देवदत्तेन । भिद्यते कुसूलेन । क्रियते कटो देवदत्तेन । भिद्यते कुसूलः । सार्वधातुक इति किम् । बभूवे देवदत्तेन । बिभिदे कुसूलः । ककारः कित्कार्यार्थः ॥

कर्मकर्तरि च ॥ १०३ ॥

कर्मकर्तरि च यत् सार्वधातुकं तस्मिन् परतो धातोर्यक्प्रत्ययो भवति । भिद्यते कुसूलः स्वयमेव । क्रियते कटः स्वयमेव । पच्यते ओदनः स्वयमेव । पच्यते उदुम्बरफलं स्वयमेव । सार्वधातुक इति किम् । बिभिदे कुसूलः स्वयमेव । भङ्गुरं काष्ठम् । पचेलिमा माषाः ॥

न दुहः ॥ १०४ ॥

दुहेः कर्मकर्तरि यङ् न भवति । दुग्धे गौः स्वयमेव । दुग्धे गौः पयः स्वयमेव ॥

णिश्रिब्रूञात्मनेपदाकर्मकभूषाकर्मकिरादिश्रन्थग्रन्थसन्स्नुनमिभ्यश्चिण् च ॥ १०५ ॥

ण्यन्तेभ्यः श्रिब्रूञ्भ्यामात्मनेपदविधावकर्मकेभ्यो भूषाक्रियेभ्यः किरादिभ्यः श्रन्थिग्रन्थिभ्यां सन्नन्तेभ्यः स्नुनमिभ्यां च कर्मकर्तरि चिण् चकारात् यक् च न भवति । कारयति कटो देवदत्तेन । कारयते कटः स्वयमेव । अचीकरत कटः स्वयमेव । चोरयते गौः स्वयमेव । अचूचुरत । उ(च्छ्री ? च्छ्र)यते दण्डः स्वयमेव । उदशि(श्री ? श्रि)यत । ब्रूते कथा स्वयमेव । अवोचत । आहते गौः स्वयमेव । आवधिष्ट । विकुरुते सैन्धवः स्वयमेव । व्यकृत । अलङ्कुरुते कन्या स्वयमेव । अलमकृत । भूषयते कन्या स्वयमेव । अबुभूषत । णिजन्तत्वादेव प्रतिषेधः । अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट । निगिरते ग्रासः स्वयमेव । न्यगीर्ष्ट । श्रथ्नीते माला स्वयमेव । अश्रन्थिष्ट । ग्रथ्नीते माला स्वयमेव । अग्रन्थिष्ट । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट । प्रस्नुते गौः स्वयमेव । प्रास्नोष्ट । नमते दण्डः स्वयमेव । अनंस्त । स्नुनमोरन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्

गवादेः कर्मकर्तृत्वम् । यत्र तु ण्यर्थो नास्ति (तत्र) कर्तृतैव । यथा प्रस्नौति गौः । दोग्धि कौशलेन । नमति पल्लवो वातेन । णिजन्ते हेतुव्यापारस्य कर्तृगतस्यापि सन्नन्ते त्विच्छायां च कर्मार्थत्वात् कर्मस्थक्रियत्वम् । अतः कर्मकर्तृसंज्ञा । तेन यक्चिणोः प्राप्तयोरेव प्रतिषेधः । एवं ब्रूते कथेति वचनं शब्दप्रकाशनफलत्वात् कर्मस्थम् । भूषाक्रियाणां च भूषाफलं शोभाख्यं कर्मण्युच्यत इति कर्मस्थक्रियत्वम् । तथान्येषामपि कर्मस्थक्रियत्वमवगन्तव्यम् ॥

तपस्तपःकर्मकात् ॥ १०६ ॥

तपेर्धातोरर्थान्तरनिवृत्तित्वेन तपःकर्मकात् कर्तरि यत् सार्वधातुकं तस्मिन् परतो यक्प्रत्ययो भवति । तप्यते तपस्तापसः । आर्जयतीत्यर्थः । एवमतप्यत । सार्वधातुक इत्येव । तेपे तपस्तपसः । अतप्त तपस्तापसः । तपःकर्मकादिति किम् । उत्तपति सुवर्णं सुवर्णकारः । भावकर्मणोः पूर्वेणैव सिद्धत्वात् अत्र कर्तरीति लभ्यते ॥

कर्तरि शप् ॥ १०७ ॥

कर्तरि यत् सार्वधातुकं वर्तते तस्मिन् परतो धातोः शब् विकरणप्रत्ययो भवति । पचति । कारयति । चोरयति । पचन् । पचमानः । कर्तरीति किम् । पच्यते ओदनः । भूयते राज्ञा । सार्वधातुक इत्येव । भूयात् । पकारः स्वरार्थः । शकारः सार्वधातुकसंज्ञार्थः ॥

अदादिभ्यो लुक् ॥ १०८ ॥

अदादिभ्यः परस्य शपो लुग् भवति । अत्ति । हन्ति । आस्ते । शेते ॥

जुहोत्यादिभ्यः श्लुः ॥ १०९ ॥

जुहोत्यादिभ्यः परस्य शपः श्लुर्भवति । जुहोति । बिभेति । बिभर्ति । लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम् ॥

दिवादिभ्यः श्यन् ॥ ११० ॥

दिवादिभ्यो धातुभ्यः कर्तृवाचिनि सार्वधातुके श्यन्प्रत्ययो भवति । शपोऽपवादः । दीव्यति । जायते । शकारः सार्वधातुकार्थः । नकारः स्वरार्थः ॥

सृजः श्राद्धे ॥ १११ ॥

श्रद्धावान् श्राद्धः । तस्मिन् कर्तरि यत् सार्वधातुकं वर्तते तस्मिन् परतः सृजेः श्यन्प्रत्ययो भवति । शपोऽपवादः । सृज्यते मालां धार्मिकः । श्राद्ध इति किम् । सृजति मालां मालिकः ॥

आशम्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषिभ्यो वा ॥ ११२ ॥

आशादिभ्यः कर्तृवाचिनि सार्वधातुके परतः श्यन्प्रत्ययो वा भवति । आश्यति आशति । म्लाश्यति म्लाशति । भ्राम्यति भ्रामति । क्राम्यति क्रामति । क्लाम्यति क्लामति । त्रस्यति त्रसति । त्रुट्यति त्रुटति । लष्यति लषति ॥

यसोऽनुपसर्गात् ॥ ११३ ॥

यसोऽनुपसर्गात् श्यन्प्रत्ययो वा भवति । यस्यति यसति । अनुपसर्गादिति किम् । आयस्यति प्रयस्यति । उत्तरसूत्रे यस एव सम्पूर्वान्नान्यस्मादिति विपरीतनियमो माभूदिति वचनम् ॥

संयसश्च ॥ ११४ ॥

सम्पूर्वाद् यसः कर्तृवाचिनि सार्वधातुके परतः श्यन्प्रत्ययो वा भवति । संयस्यति संयसति ॥

कुषिरजोः कर्मकर्तरि परस्मैपदं च ॥ ११५ ॥

कुषिरजिभ्यां कर्मकर्तृविषयाभ्यां श्यन् परस्मैपदं च वा भवति । यकोऽपवादः । वावचनात् पक्षे सोऽपि भवति । कुष्यति पादः स्वयमेव । कुष्यते । रज्यति वस्त्रं स्वयमेव । रज्यते । यक्श्यनोः स्वरे नुमि च विशेषः । तेन कुष्यन्ती रज्यन्तीति 'शप्श्यनोर्नित्यमि'ति नित्यं नुम् भवति । कर्मकर्तरीति किम् । कुष्णाति पादः । रजति वस्त्रम् ॥

तुदादिभ्यः शः ॥ ११६ ॥

तुदादिभ्यो धातुभ्यः कर्तृवाचिनि सार्वधातुके परतः शप्रत्ययो भवति । शपोऽपवादः । तुदति । नुदति । शकारः सार्वधातुकसञ्ज्ञार्थः ॥

## रुधादीनां श्नम् ॥ ११७ ॥

रुधादीनां धातूनां कर्तृवाचिनि सार्वधातुके परतोऽन्त्यादचः परः श्नम्प्रत्ययो भवति । शपोऽपवादः । रुणद्धि रुन्धे । भिनत्ति भिन्ते । मकारो देशविध्यर्थः । शकारः 'श्नमसोरल्लोप' इति विशेषणार्थः ॥

## तनादिभ्य उः ॥ ११८ ॥

तनादिभ्यः कर्तृवाचिनि सार्वधातुके परत उप्रत्ययो भवति । शपोऽपवादः । तनोति । करोति ॥

## स्वादिभ्यः श्नुः ॥ ११९ ॥

स्वादिभ्यः कर्तृवाचिनि सार्वधातुके परतः श्नुप्रत्ययो भवति । शपोऽपवादः । सुनोति । सिनोति । शकारः सार्वधातुकार्थः ॥

## श्रुकृव्धिवां श्रृकृधि च ॥ १२० ॥

श्रु कृव् धिव् इत्येतेभ्यः कर्तृवाचिनि सार्वधातुके परतः श्नुप्रत्ययो भवति । एषां च यथासङ्ख्यं शृ कृ धि इत्येते आदेशा भवन्ति । शृणोति कृणोति धिनोति ॥

## अक्षो वा ॥ १२१ ॥

'अक्षू व्याप्ताावि'त्यस्माद् धातोः कर्तृवाचिनि सार्वधातुके परतः श्नुप्रत्ययो वा भवति । शपोऽपवादः । पक्षे सोऽपि भवति । निरक्ष्णोति । निरक्षति ॥

## तनूकरणे तक्षः ॥ १२२ ॥

तक्षेर्धातोस्तनूकरणार्थात् कर्तृवाचिनि सार्वधातुके परतः श्नुप्रत्ययो वा भवति । तक्ष्णोति काष्ठम् । तक्षति काष्ठम् । तनूकरण इति किम् । सन्तक्षति वाग्भिः । भर्त्सयतीत्यर्थः ॥

## स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुभ्यः ॥ १२३ ॥

स्तन्भ्वादिभ्यः सौत्रेभ्यो धातुभ्यः स्कु इत्येतस्माच्च कर्तृवाचिनि सार्वधातुके परतः श्नुप्रत्ययो भवति । स्तभ्नोति । स्तुभ्नोति । स्कभ्नोति ।

स्कुभ्नोति । स्कुनोति । स्तम्भ्वादयः सौत्रा भ्वादित्वाद् धातवः । उदित्करणं तु क्त्वानिष्ठयोरिडागमस्य विकल्पप्रतिषेधौ यथा स्याताम् । स्तब्ध्वा स्तम्भित्वा । स्तब्धः स्तब्धवानिति ॥

श्ना क्र्यादिभ्यश्च ॥ १२४ ॥

क्र्यादिभ्यः स्तम्भ्वादिभ्यश्च कर्तृवाचिनि सार्वधातुके परतः श्नाप्रत्ययो भवति । क्रीणाति । प्रीणाति । स्तभ्नाति । स्तुभ्नाति । स्कभ्नाति । स्कुभ्नाति । शकारः सार्वधातुकसंज्ञार्थः ॥

हलो हौ शानच् ॥ १२५ ॥

हलन्तेभ्यः क्र्यादिभ्यः स्तम्भ्वादिभ्यश्च हौ परतः शानच्प्रत्ययो भवति । श्नापवादः । पुषाण । मुषाण । उत्तभान । निष्कभान । हल इति किम् । लुनीहि । स्तृणीहि । हाविति किम् । अश्नाति । अनन्तरत्वात् श्नाप्रत्ययस्यैषोऽपवादः । तेन श्नुविषये न भवति । उत्तभ्नुहि । विष्कुभ्नुहि । स्यादिविकरणानां पूर्णोऽवधिः ॥

बहुलम् ॥ १२६ ॥

बहुलमित्यधिकारः । आद्वितीयाध्यायपरिसमाप्तेः ।

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"

तद् यथावसरमुदाहरिष्यामः ॥

भावकर्मणोराण्यतः ॥ १२७ ॥

इत उत्तरम् 'ऋहलोर्ण्यदि'ति यावत् ये प्रत्ययास्त(व्या ? व्यदा)दयस्ते भावकर्मणोर्बहुलं भवन्ति । तांस्तत्रैवोदाहरिष्यामः ॥

तव्यत्तव्यानीयरः ॥ १२८ ॥

धातोरित्यनुवर्तते । ततस्तव्यत् तव्य अनीयर् इत्येते प्रत्यया भावकर्मणोर्बहुलं भवन्ति । कर्तव्यं भवता । कर्तव्यः कटः । करणीयं भवता । करणीयः कटः । तव्यत्तव्य(तोः ? योः) स्वरे समासे च विशेषः । ब्राह्मणकर्तव्यं ब्राह्मणस्य कर्तव्यमिति । अनीयरो रेफः स्वरार्थः ॥

वास्तव्यः कर्तरि ॥ १२९ ॥

वास्तव्य इत्ययं शब्दस्तव्यत्प्रत्ययान्तः कर्तरि निपात्यते । वसतीति वास्तव्यः । निपातनाद् वृद्धिः स्वरितान्तत्वं च भवति ॥

प्रवचनीयोपस्थानीयरमणीयादयो वा ॥ १३० ॥

प्रवचनीयादयः शब्दा अनीयर्प्रत्ययान्ताः कर्तरि वा निपात्यन्ते । प्रवक्तीति प्रवचनीयः उपाध्यायः । उपतिष्ठत इत्युपस्थानीयः शिष्यः । रमयतीति रमणीयो देशः । मदयतीति मदनीया योषित् । दीपनीयं चूर्णम् । वावचनाद् भावकर्मणोरपि भवति । प्रवचनीयं भवता । प्रवचनीयः शिष्यः । उपस्थानीयं भवता । उपस्थानीयो गुरुरिति ॥

स्नानीयादयः करणे ॥ १३१ ॥

स्नानीयादयोऽनीयरन्ताः करणे वा निपात्यन्ते । स्नात्यनेनेति स्नानीयं चूर्णम् । यानीयोऽश्वः । वावचनात् स्नानीयं भवता । यानीयोऽश्वः ॥

दानीयादयः सम्प्रदाने ॥ १३२ ॥

दानीयादयोऽनीयरन्ताः सम्प्रदाने वा निपात्यन्ते । दानीयो ब्राह्मणः । स्पृहणीया श्रीः । वावचनाद् दानीयं भवता, स्पृहणीयं वचनमिति ॥

समावर्तनीयादयोऽपादाने ॥ १३३ ॥

समावर्तनीयादयोऽनीयरन्ता अपादाने वा निपात्यन्ते । समावर्तन्तेऽस्मात् समावर्तनीयो गुरुः । उद्विजतेऽस्माद् उद्वेजनीयः खलः । वावचनात् समावर्तनीयं भवता, उद्वेजनीयं भवता ॥

स्थानीयादयोऽधिकरणे ॥ १३४ ॥

स्थानीयादयोऽनीयरन्ता अधिकरणे वा निपात्यन्ते । तिष्ठन्त्यस्मिन्निति स्थानीयं नगरम् । शेतेऽस्मिन्निति शयनीयः पर्यङ्कः । वावचनाद् भावकर्मणोरपि भवति । स्थानीयं भवता । शयनीयः भवता । 'वास्तव्यः—' इत्यादि बहुलवचनस्य प्रपञ्चः ॥

केलिमर्कर्मकर्तरि ॥ १३५ ॥

धातोः कर्मकर्तरि केलिमर्प्रत्ययो भवति । पच्यन्ते स्वयमेव पचेलिमा माषाः । भिद्यन्ते स्वयमेव भिदेलिमानि काष्ठानि ॥

अचो यत् ॥ १३६ ॥

अजन्तात् धातोर्भावकर्मणोर्बहुलं यत्प्रत्ययो भवति । तव्यत्तव्यानीयरामपवादः । 'कृत्यल्लुटोऽस्त्रियामि'ति वचनात् पक्षे तेऽपि भवन्ति । देयं स्थेयं चेयं नेयम् । दातव्यं स्थातव्यं चेतव्यं नेतव्यम् । ऋवर्णान्तात् ण्यतं वक्ष्यतीति अज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यात् । दित्स्यम् । धित्स्यम् ॥

भव्यगेयजन्यरम्याः कर्तरि वा ॥ १३७ ॥

भव्यादयः शब्दा यदन्ताः कर्तरि वा निपात्यन्ते । भवत्यसौ भव्यः । भव्यमनेन । गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानि । जायतेऽसौ जन्यः । जन्यमनेन । रमयत्यसौ रम्यः । जन्य इति ण्यतैव सिद्धे यन्निपातनं 'यतोऽनाव' इत्युदात्तार्थम् ॥

स्थेयोऽधिकरणे ॥ १३८ ॥

स्थेय इत्ययं यदन्तोऽधिकरणे निपात्यते । तिष्ठत्यस्मिन्निति स्थेयः । स्थेयमनेन ॥

पोरदुपधात् ॥ १३९ ॥

पवर्गान्ताद् धातोरकारोपधाद् भावकर्मणोर्बहुलं यत् भवति । ण्यतोऽपवादः । जप्यं लभ्यं गम्यम् । अदुपधादिति किम् । कोप्यं गोप्यम् आप्यम् । तपरकरणं तत्कालावधारणार्थम् । आप्यम् ॥

शकितकिचतियतिशासिसहिवधियजिभजिभ्यः ॥ १४० ॥

शकादिभ्यो धातुभ्यो भावकर्मणोर्यत्प्रत्ययो भवति । ण्यतोऽपवादः । शक्यं तक्यं च(क्यं ? त्यं) यत्यं शस्यं सह्यं वध्यं यज्यं भज्यम् । बहुलवचनाद् याज्यं भाग्यम् । 'यजेः प्रवचयज्यत्यजामि'ति कुत्वं न भवति । वधमर्हति वध्य इति तद्धितेन सिद्धे यत्प्रत्ययाभिधानमसिवध्य इति 'कर्तृकरणे कृता बहुलमि'ति तृतीयासमासार्थमाद्युदात्तार्थं च ॥

गदमदयमिभ्योऽनुपसर्गे ॥ १४१ ॥

गदादिभ्योऽनुपसर्गेभ्यो भावकर्मणोर्यत्प्रत्ययो भवति । गद्यं मद्यं यम्यम् । अनुपसर्ग इति किम् । प्रगाद्यं प्रमाद्यं प्रयाम्यम् । यमो नियमार्थं वचनम् । बहुलाधिकाराद् माद्यत्यनेनेति मद्यं, करणेऽपि । नियम्यमिति सोपसर्गादपि भवति ॥

चरेराङि चागुरौ ॥ १४२ ॥

चरेरनुपसर्गादाङुपसृष्टाच्चागुरावर्थे भावकर्मणोर्यत्प्रत्ययो भवति । चर्यं भवता । चर्यो देशः । आचर्यम् आचर्यः । आङि चेति किम् । अभिचार्यम् । अगुराविति किम् । आचार्यः ॥

अवद्यपण्यवर्या गर्ह्यविक्रेयानिरोधेषु ॥ १४३ ॥

अवद्यपण्यवर्या इत्येते शब्दा यत्प्रत्ययान्ताः यथासंख्यं गर्ह्यविक्रेयानिरोधेत्येतेष्वर्थेषु निपात्यन्ते । अवद्यं भवति गर्ह्यं चेत् । अनुद्यमन्यत् । पण्यं भवति विक्रेयं चेत् । पाण्यमन्यत् । वर्या भवत्यनिरोधश्चेत् । शतेन वर्या कन्या । वृत्यान्या । स्त्रीलिङ्गनिर्देशादनिरोधेऽपि वार्या ऋत्विजः ॥

वह्यं करणम् ॥ १४४ ॥

वह्यमिति वहेर्यन्निपात्यते करणं चेद् भवति । वहन्त्यनेनेति वह्यं शकटम् । वाह्यमन्यत् ॥

अर्यः स्वामिवैश्ययोः ॥ १४५ ॥

अर्य इत्यर्तेर्यन्निपात्यते स्वामिवैश्ययोरर्थयोः । अर्यः स्वामी । अर्यो वैश्यः । स्वामिवैश्ययोरिति किम् । आर्यः ॥

उपसर्या काल्या प्रजने ॥ १४६ ॥

उपसर्येत्युपपूर्वात् सर्तेर्यन्निपात्यते प्रज(न?) ने गर्भग्रहणे चेत् प्राप्तकाला भवति । उपसर्या गौः । काल्या । प्रजन इति किम् । उपसार्या शरदि मथुरा ॥

कर्तर्यजर्यं सङ्गते ॥ १४७ ॥

नञ्पूर्वात् जीर्यतेः सङ्गते कर्तरि यन्निपात्यते । न जीर्यतीत्यजर्य-मार्यसङ्गतम् । सङ्गत इति किम् । अजरिता कम्बलः ॥

वदः सुपि क्यप् च ॥ १४८ ॥

वदेर्धातोरनुपसर्गे सुबन्त उपपदे भावकर्मणोः क्यप्प्रत्ययो भवति । चकाराद् यच्च । ब्रह्मोद्यं ब्रह्मवद्यम् । सुपीति किम् । वाद्यम् । अनुपसर्ग इति किम् । प्रवाद्यम् । ककारः कित्कार्यार्थः । पकार उत्तरत्र तुगाद्यर्थः ॥

मृषोद्यम् ॥ १४९ ॥

मृषाशब्द उपपदे वदेः क्यप्प्रत्ययो निपात्यते । मृषा उद्यते मृषोद्यम् ॥

भुवः ॥ १५० ॥

भवतेः सुप्यनुपसर्ग उपपदे क्यप् भवति । ब्रह्मभूयं देवभूयम् । सुपीति किम् । भव्यम् । अनुपसर्ग इति किम् । प्रभव्यम् । भुवोऽनुपसर्ग-स्याकर्मकत्वात् भाव एवोदाह्रियते ॥

भावे हनस्त च ॥ १५१ ॥

हन्तेः सुप्यनुपसर्ग उपपदे भावे क्यप् भवति तकारश्चान्तादेशः । ब्रह्मणो वधः ब्रह्महत्या । भ्रूणहत्या । स्वभावतः स्त्रीलिङ्गः । भाव इति किम् । घनघात्यम् । सुपीत्येव ; घातो वर्त्तते । ण्यत्तु न भवति । बहुला-धिकारात् । अनुपसर्ग इत्येव । उपघातः । निघातः ॥

इण्स्तुशासुवृञ्दृजुषिभ्यः ॥ १५२ ॥

इणादिभ्यो धातुभ्यो भावकर्मणोरर्थयोः क्यप्प्रत्ययो भवति । इत्यः स्तुत्यः शिष्यः वृत्यः आदृत्यः जुष्यः । इणिति णकारनिर्देशादयते-रिङिकोश्च न भवति । अध्येयं उपेयमिति । वृञिति ञकारनिर्देशात् 'वृङ् संभक्ता'वित्यस्मान्न भवति । 'अनिवार्यो गजैरन्यैरि'ति । वार्या ऋ-त्विज इति तु वृञो बहुलाधिकारात् भवति । एवमवश्यस्तुत्य इति बहु-लाधिकारादावश्यकेऽपि ण्यतं बाधित्वा क्यप् भवति । 'आशास्यमन्यत् पुनरुक्तभूत'मिति शासेराङ्पूर्वान्न भवति ॥

ऋदुपधाच्चानृचिक्लपिचृतेः ॥ १५३ ॥

ऋदुपधाद्धातोः ऋचिक्लपिचृतिवर्जितात् भावकर्मणोः क्यप् भवति। वृत्यं वृध्यम् । अनृचिक्लपिचृतेरिति किम् । अर्च्यं सङ्कल्प्यं विचर्त्यम् । लत्वस्यासिद्धत्वात् क्लपिरपि ऋकारोपध इति प्रतिषिध्यते । तपरकरणं किम् । 'कॄत संशब्दन' इत्यस्मात् ण्यदेव भवति । कीर्त्यम् ॥

खनेरी च ॥ १५४ ॥

खनेर्धातोर्भावकर्मणोरर्थयोः क्यप् भवति ईकारश्चादेशः । खेयम् । दीर्घोच्चारणं तुङ्निवृत्त्यर्थम्। 'ये वा' इत्यात्वविकल्पं तु सन्नियोगशिष्टत्वेनान्तरङ्गत्वाद् बाधते ॥

भृञोऽसंज्ञायाम् ॥ १५५ ॥

भृञो धातोः असंज्ञायां क्यब् भवति । भृत्यः भर्त्तव्य इत्यर्थः । असंज्ञायामिति किम् । भार्या नाम क्षत्रियाः । भार्या पत्नी । संज्ञायामपि बहुलाधिकारेण कुमारभृत्येति भाव एव विधानम् ॥

समि वा ॥ १५६ ॥

सम्युपपदे भृञो भावकर्मणोः क्यप् वा भवति । संभृत्यः । संभार्यः ॥

कृवृषिमृजिशंसिदुहिगुहिभ्यः ॥ १५७ ॥

कृ इत्यादिभ्यो धातुभ्यो भावकर्मणोः क्यप् वा भवति । कृत्यं कार्यम् । वृष्यं (वा ? व)र्ष्यम् । मृज्यं मार्ग्यम् । शस्यं शंस्यम् । दुह्यं दोह्यम्। गुह्यं गोह्यम् ॥

कृष्टपच्याः कर्मकर्तरि ॥ १५८ ॥

पचेः कृष्टशब्दे सप्तम्यन्त उपपदे कर्मकर्तरि क्यप्प्रत्ययो निपात्यते। कृष्टे पच्यन्ते स्वयमेव कृष्टपच्याः शालयः ॥

रुच्याव्यथ्यौ कर्त्तरि ॥ १५९ ॥

रुचेर्नञ्पूर्वाद् व्यथेश्च कर्तरि क्यप् निपात्यते। रोचतेऽसौ रुच्यः । न व्यथते अव्यथ्यः ॥

राजसूयसूर्यौ यज्ञदेवतयोः ॥ १६० ॥

राजसूयसूर्य इत्येतौ शब्दौ यथासङ्ख्यं यज्ञदेवतयोर्निपात्येते । राजोपपदात् सुनोतेः कर्मण्यधिकरणे वा क्यप् दीर्घत्वम् । राज्ञा सोतव्यः, राजा सोमः, स चास्मिन् सूयते राजसूयो यज्ञः । सूर्य इति सर्त्तेरुत्वं सूतेर्वा रुगागमः क्यप् च कर्तरि । सरति सूते वा सूर्यो देवता । निपातनेषु यत्र कारकविशेषो नोपात्तस्तत्र बहुलाधिकारान्निपातनसामर्थ्याद्वा लभ्यते ॥

भिद्योद्ध्यौ नदे ॥ १६१ ॥

भिदेरुज्झेश्च नदे कर्तर्यर्थे क्यप् निपात्यते । उज्झेर्धत्वं च । भिनत्ति कूलानीति भिद्यः । उज्झत्युदकमित्युद्ध्यः । नद इति किम् । भेत्ता । उज्झिता ॥

तिष्यपुष्यसिध्या नक्षत्रे ॥ १६२ ॥

त्विषिपुषिसिधिभ्यो नक्षत्रेऽभिधेये क्यब् निपात्यते त्विषेर्वलोपश्च । त्वेषन्ति पुष्यन्ति सिध्यन्ति चास्मिन् कार्याणि तिष्यः पुष्यः सिध्यः । नक्षत्र इति किम् । त्वेषणः पोषणः सेधनः ॥

युग्यं च पत्रे ॥ १६३ ॥

युजः क्यप् कुत्वं च निपात्यते पत्रे वाहने अभिधेये । युञ्जन्ति तदिति युग्यं वाहनं गजाश्वादि । योग्यमन्यत् ॥

आज्यं घृते ॥ १६४ ॥

आङ्पूर्वादञ्जेर्घृतेऽर्थे क्यप् निपात्यते । आञ्जन्त्यनेनेति आज्यम् । आञ्जनमन्यत् ॥

कुप्यं धने ॥ १६५ ॥

गुपेः क्यप् आदिकत्वं च निपात्यते धने अर्थे । गोपायन्ति तदिति कुप्यं धनम् । गोप्यमन्यत् ॥

जयतेर्हलौ ॥ १६६ ॥

जयतेर्हलावभिधेये क्यप् निपात्यते । जित्य हलिः । जेयमन्यत् ॥

वौ नीपूङ्भ्यां कल्कमुञ्जयोः ॥ १६७ ॥

वावुपपदे नीपूङ्भ्यां यथासङ्ख्यं कल्कमुञ्जयोरर्थयोः क्यप्प्रत्ययो भवति । विनीयः कल्कः । विनेयमन्यत् । विपूयो मुञ्जः । विपाव्यमन्यत् ॥

पदास्वैरिपक्ष्यबाह्यासु ग्रहः ॥ १६८ ॥

ग्रहेर्धातोः पदादिष्वर्थेषु क्यप्प्रत्ययो भवति । प्रगृह्यं पदं यदपि न सन्धीयते । अवगृह्यं, यस्यावग्रहः पृथग्भावः क्रियते । अस्वैरी परतन्त्रः । गृह्यका इमे । पक्षे भवः पक्ष्यः । अर्जुनगृह्याः । वासुदेवगृह्याः । बहिर्भवा बाह्या । नगरगृह्या सेना । ग्रामगृह्या श्रेणिः । पदादिष्विति किम् । ग्राह्यः ॥

ऋहलोर्ण्यत् ॥ १६९ ॥

ऋवर्णान्ताद्धलन्ताच्च धातोर्भावकर्मणोर्बहुलं ण्यत्प्रत्ययो भवति । कार्यम् । हार्यम् । पाक्यम् । वाक्यम् । णकारो वृद्ध्यर्थः । तकारः स्वरार्थः ॥

पाणौ सृजः ॥ १७० ॥

पाणावुपपदे सृजेर्ण्यत्प्रत्ययो भवति । ऋदुपधक्यपोऽपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः ॥

समवपूर्वाच्च ॥ १७१ ॥

समवेत्युपसर्गसमुदायपूर्वात् सृजेर्ण्यत्प्रत्ययो भवति । समवसृज्यत इति समवसर्ग्यः ॥

ओरावश्यके ॥ १७२ ॥

अवश्यम्भाव आवश्यकम् । मनोज्ञादित्वात् वुञ् । तस्मिन् गम्यमाने उवर्णान्ताद् धातोर्भावकर्मणोरर्थयोर्ण्यत्प्रत्ययो भवति । यतोऽपवादः । भव्यम् अवश्यभाव्यम् । लव्यम् अवश्यलाव्यम् । 'सुप्सुपे'ति समासः । 'कृत्येऽवश्यम्' इति मलोपः ॥

आसुयुवपिरपिलपित्रपिचमयानमिदभिभ्यः ॥ १७३ ॥

आङ्पूर्वाभ्यां सुनोतिनमिभ्यां यौत्यादिभ्यश्च भावकर्मणोर्ण्यत् भवति। यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। आ(न? ना)म्यम्। आदाम्यम्। आनमिरन्तर्भावितण्यर्थः सकर्मकः। दभिः सौत्रो वञ्चने वर्तते ॥

अमावसोऽधिकरणे णिद्वा ॥ १७४ ॥

अमापूर्वात् वसेरधिकरणे ण्यत्प्रत्ययो भवति वा चास्य णित्वम्। अमा सह वसतोऽस्यां सूर्याचन्द्रमसाविति अमावस्या अमावास्या ॥

आङि प्लुपतिभ्यां कर्तरि च ॥ १७५ ॥

आङ्युपपदे प्लुपतिभ्यां कर्तरि ण्यत् भवति। चकारात् भावकर्मणोश्च। आप्लवत इत्याप्लाव्यः। आप्लाव्यमनेनेति वा। आपततीत्यापात्यः। आपात्यमनेन वा ॥

प्रणाय्योऽसम्मतनिष्कामयोः ॥ १७६ ॥

प्रणाय्य इति प्रपूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते। प्रणाय्यश्चोरः। प्रणाय्यायान्तेवासिने ब्रह्म प्रब्रूयात्। असम्मतनिष्कामयोरिति किम्। प्रणेयः ॥

पाय्यधाय्ये मानसामिधेन्योः ॥ १७७ ॥

पाय्य धाय्य इत्येतौ शब्दौ ण्यदन्तौ यथासङ्ख्यं मानसामिधेन्योरर्थयोर्निपात्येते। माङः करणे ण्यत् आदिपत्वं च। मीयतेऽनेनेति पाय्यं मानम्। धाञः करणे ण्यत्। धीयते समिदग्नावनयेति धाय्या सामिधेनी। रूढित्वात् काचिदेवोच्यते। सामिधेनीशब्दस्य चोपलक्षणत्वात् असामिधेन्यप्यभिधीयते। धाय्याः शंसतीति ॥

याज्या दानर्चि ॥ १७८ ॥

यजेः करणे ण्यत् कुत्वाभावश्च निपात्यते दानर्च्यभिधेयायाम्। इज्यते अनयेति याज्या ॥

सान्नाय्यनिकाय्यौ हविर्निवासयोः ॥ १७९ ॥

सान्नाय्य निकाय्य इत्येतौ शब्दौ ण्यदन्तौ यथासङ्ख्यं हविर्निवासयोरर्थयोर्निपात्येते । सम्पूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च । सान्नाय्यम् । रूढित्वाद्धविर्विशेष एवावतिष्ठते । सन्नेयमन्यत् । निपूर्वाच्चिनोतेर्ण्यदायादेशावादिकुत्वं च । निकाय्यो निवासः । निचेयमन्यत् ॥

क्रतौ कुण्डपाय्यसञ्चाय्यौ ॥ १८० ॥

कुण्डपाय्यसञ्चाय्यशब्दौ ण्यदन्तौ क्रतावर्थे निपात्येते । कुण्डैः पीयते सोमोऽस्मिन्निति कुण्डपाय्यः क्रतुः । सम्पूर्वाच्चिनोतेर्ण्यदायादेशश्च । सञ्चीयतेऽग्निरस्मिन्निति सञ्चाय्यः क्रतुः ॥

अग्नावानाय्यपरिचाय्योपचाय्यसमूह्याः ॥ १८१ ॥

आनाय्यादयः शब्दा अग्नावभिधेये ण्यदन्ता निपात्यन्ते । आङ्पूर्वान्नयतेः ण्यदायादेशौ निपात्येते । गार्हपत्यादानीयत इत्यानाय्यो दाक्षिणाग्निः । आहवनीयेन सहैकयोनिरेवोच्यते । पर्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ, सम्पूर्वाद् वहेः सम्प्रसारणं दीर्घत्वं च निपात्यते । परिचीयत इति परिचाय्योऽग्निः । एवमुपचाय्यः समूह्यः । अन्यत्रानेयः परिचेयः उपचेयः संवाह्य इति भवति ॥

चित्याग्निचित्ये च ॥ १८२ ॥

चित्यः अग्निचित्या इत्येतौ शब्दौ क्यबन्तावन्तोदात्तौ निपात्येते । चेचीयत इति चित्योऽग्निः । अग्निचयनमेवाग्निचित्या । अग्नावित्येव । चेयमन्यत् ॥

कृत्याः प्रैषातिसर्गप्राप्तकालेषु ॥ १८३ ॥

प्रेषणं प्रैषः । कामचारानुज्ञा अतिसर्गः । निमित्तभूतस्य कालस्य प्राप्तिः प्राप्तकालता । एतेष्वर्थेषु गम्यमानेषु यथास्वं भावकर्मादिष्वाभिधेयेषु कृत्यास्तव्यदादयो भवन्ति । भवता खलु कटः कर्त्तव्यः करणीयः कृत्यः कार्यः । प्रेषितोऽसि प्राप्तस्ते कालः कटकरण इति ॥

ऊर्ध्वमौहूर्त्तिकेषु च ॥ १८४ ॥

ऊर्ध्वं मुहूर्त्तात् भवेषु च प्रैषादिषु गम्यमानेषु भावकर्मादिष्विव कृत्याः प्रत्यया भवन्ति । ऊर्ध्वं मुहूर्त्तात् भवता कटः कर्त्तव्यः करणीयः

कृत्यः कार्यः । प्रेषितोऽसि अतिसृष्टोऽसि प्राप्तस्ते कालः ऊर्ध्वं मुहूर्त्तात् कटकरण इति । ननु च भावकर्मणोः सामान्येन विहिता एव कृत्यास्ते प्रैषादिष्वपि भविष्यन्ति । सत्यम् । किन्तु विशेषविहितेन लोटा प्रैषादिषु, ऊर्ध्वमौहूर्त्तिकेषु च लिङ्लोड्भ्यां बाधो मा भूदिति विधीयन्ते ॥

आवश्यकाधमर्ण्यार्हशक्तिषु च ॥ १८५ ॥

आवश्यकादिषु गम्यमानेषु प्रकृतिप्रत्ययार्थोपाधिषु यथास्वं भावकर्मादिष्वभिधेयेषु कृत्यप्रत्यया भवन्ति । अवश्यं भवता कटः कर्तव्यः करणीयः कृत्यः कार्यः । भवानधमर्णः । भवता खलु निष्को दातव्यः दानीयः देयः । भवानर्हः । भवता खलु कन्या वोढव्या वहनार्या वाह्या । भवान् शक्तः । भवता खलु भारो वोढव्यः वहनीयः वाह्यः इति । कर्तव्यानां भव्यादिकृत्यानाम् आवश्यकाधमर्ण्ययोर्णिनिः । कर्तव्यानां तु भावकर्मार्थानाम् अर्हशक्त्योर्लिङा विशेषविहितेन बाधो मा भूदिति वचनम् ॥

कर्तरि ण्वुल्तृजचः ॥ १८६ ॥

धातोरिति वर्त्तते । ततः कर्तरि कारके ण्वुल् तृच् अच इत्येते प्रत्यया बहुलं भवन्ति । कारकः । कर्त्ता । करः । पाचकः । पक्ता । पचः । कर्तरीति चाधिकारः प्राक् क्त्वो विधानात् । यत्रान्यार्थादेशनं नास्ति तत्रोपतिष्ठते । ण्वुलो णकारो वृद्ध्यर्थः । लकारः स्वरार्थः । तृचश्चकारः सामान्यग्रहणार्थः । अचो विशेषणार्थः ॥

गलेचोपकपादहारकादयः कर्मणि ॥ १८७ ॥

गलेचोपकपादहारकादयः शब्दा ण्वुलन्ताः कर्मणि साधवो भवन्ति । गले चोप्यते गलेचोपकः । पादाभ्यां ह्रियते पादहारकः । बहुलग्रहणस्यैवायमुत्तरतश्च प्रपञ्चः ॥

अर्हतौ तृच् ॥ १८८ ॥

अर्हत्युपाधौ कर्तरि धातोस्तृच्प्रत्ययो भवति । भवान् खलु कन्याया वोढा । भवानेतदर्हति ॥

पचपतवदवशव्रणरणक्षमभृवृञ्गुपिसृ[1]पिनृ[2]तिदृशिमि-
षिमिधिमिहिदिहिरुहि(रुधि)वहादिभ्योऽच् ॥ १८९ ॥

पचादिभ्यो धातुभ्यः कर्तर्यच्प्रत्ययो भवति । पुनर्विधानमपवाद-बाधनार्थं तत्समावेशार्थं च । पचतीति पचः । श्वपच इत्यण्विषयेऽपि । पततीति पतः । परापत इत्यण्विषयेऽपि भवति । णस्तु ज्वलादिपाठात् पक्षे भवत्येव । निपातः । वदतीति वदः । कद्वदः यद्वद इत्यण्विषयेऽपि । वष्टीति वशा । ण्वुल्तृचौ बाधते । तुर्वश इत्यण्विषयेऽपि । व्रणयतीति व्रणः । अरिव्रणा शक्तिरित्यण् न भवति । रणतीति रणः । ण्वुल् न भवति । एवं क्षमः । बिभर्तीति भरः । जारभर इत्यणं बाधते । वृणोतीति वरः । कन्यावर इत्यण्विषयेऽपि । गोपः । सर्पः । नर्तः । दर्शः । मेषः । मेधः । मेघः । 'मिहेर्हस्याचि संज्ञायामि'ति कुत्वम् । देहः । प्ररोहः । न्यग्रोधः । इगुपधलक्षणं कं बाधते । अनिमिष इति बहुलाधिकारात् कोऽपि भवति । वहतीति वहः । रसावह इत्यण्विषयेऽपि । आदिग्रहणात् त्वन्येऽप्यमरादयो भवन्ति ॥

नदभषप्लुगॄतॄसूदिदिविसिविचरिचोरिचिलिगाहि-
भ्यष्टित् ॥ १९० ॥

नदादिभ्यः कर्तर्यच् टित् भवति । नदः । स्त्रियां नदी । भषः भषी । प्लवः प्लवी । गरः गरी । तरः तरी । दरः दरी । सूदः सूदी । देवः देवी । सेवः सेवी । चरः चरी । चोरः चोरी । ब्राह्मणचेलः ब्राह्मणचेली । गाहः गाही ॥

ब्रुवः शित् ॥ १९१ ॥

ब्रुवः कर्तर्यच्प्रत्ययः शित् भवति । ब्राह्मणमात्मानं ब्रूते ब्राह्मणब्रुवः । अणं बाधते । शिद्वचनं वच्यादेशगुणबाधनार्थम् ॥

नन्दिवाशिमदिनर्दिसाधिशोभिवर्धिभीषिभूषिदूषि-
साहिहपिजल्पिभ्यो ल्युः ॥ १९२ ॥

१. 'विसृजिनृ', २. 'नृ' ख. पाठः.

नन्द्यादिभ्यः कर्तरि ल्युः प्रत्ययो भवति । नन्दयतीति नन्दनः । वाशयतीति वाशनः । मदयतीति मदनः । नर्दयतीति नर्दनः । साधयतीति साधनः । शोभयतीति शोभनः । वर्धयतीति वर्धनः । भीषयतीति भीषणः । भूषयतीति भूषणः । दूषयतीति दूषणः । सहत इति सहनः । दर्पयतीति दर्पणः । जल्पतीति जल्पनः । लकारः स्वरार्थः ॥

रमिरुचिकृतितापितृदिदहियुपूभ्यः संज्ञायाम् ॥१९३॥

रम्यादिभ्यः संज्ञायां कर्तरि ल्युर्भवति । रमयतीति रमणः । रोचयतीति रोचनो विरोचनः । विकर्त्तन । तपनः । प्रतर्दनः । दहनः । यवनः । पवनः ॥

लुवो नो णश्च ॥ १९४ ॥

लुनातेः संज्ञायां कर्तरि ल्युर्भवति । नकारस्य च णकारः । लवणः ॥

समि क्रन्दिकृषिहृषिभ्यः ॥ १९५ ॥

सम्युपपदे क्रन्द्यादिभ्यः संज्ञायां कर्तरि ल्युर्भवति । संक्रन्दयतीति संक्रन्दनः । सङ्कर्षणः । संहर्षणः ॥

कर्मणि दम्यर्दिनाशिसूदिभ्यः ॥ १९६ ॥

कर्मण्युपपदे दम्यादिभ्यः कर्तरि संज्ञायामसंज्ञायां च ल्युर्भवति । सर्वदमनः । जनार्दनः । चित्तविनाशनः । मधुसूदनः । असंज्ञायामपि । रिपुदमनः । परार्दनः । रोगनाशनः । अरिसूदनः ॥

ग्राहिस्थापराधिमन्त्रिसम्मर्दिभ्यो णिनिः ॥ १९७ ॥

ग्रहादिभ्यो धातुभ्यः कर्तरि णिनिप्रत्ययो भवति । गृह्णातीति ग्राही । स्थायी । अपराधी । मन्त्री । सम्मर्दी । णकारो वृद्ध्यर्थः ॥

उपावयो रुधः ॥ १९८ ॥

उपावयोरुपपदयो रुधेर्धातोः कर्तरि णिनिर्भवति । उपरोधी । अवरोधी ॥

उदि भासिदसिसहिभ्यः ॥ १९९ ॥

उद्युपपदे भास्यादिभ्यः कर्तरि णिनिर्भवति। उद्भासत इत्युद्भासी। उद्सते(?) उद्वासी। उत्साही॥

श्रुशाविशिवसिवपिरक्षिभ्यो नौ॥ २००॥

शृणोत्यादिभ्यो धातुभ्यः नावुपपदे कर्तरि णिनिर्भवति। निश्रावी। निशायी। निवेशी। निवासी। निवापी। निरक्षी॥

याचिव्रजिवदिवसिव्याहृसंव्यवहृभ्यो नञि॥ २०१॥

याच्यादिभ्यो नञ्युपपदे कर्तरि णिनिर्भवति। न याचते अयाची। अव्राजी। अवादी। अवासी। अप्रवासी। अव्याहारी। असंव्यवहारी॥

अचोऽचित्तवत्कर्तृकात्॥ २०२॥

अजन्ताद्धातोरचित्तवति कर्तरि नञ्युपपदे णिनिर्भवति। अकारी घर्मस्य बालातपः। अहारी शीतस्य शिशिरः। अचित्तवत्कर्तृकादिति किम्। अकर्ता कटस्य देवदत्तः॥

अभौ भुवो भूते॥ २०३॥

अभावुपपदे भवतेर्धातोर्भूते काले कर्तरि णिनिर्भवति। अभिभवति स्म अभिभावी॥

परिव्योर्गुणश्च वा॥ २०४॥

परिव्योरुपपदयोर्भवतेः कर्तरि णिनिर्भवति गुणश्च वा। परिभवी परिभावी। विभवी विभावी॥

विशयी विषयी च देशे॥ २०५॥

विपूर्वाभ्यां शीङ्षिञ्भ्यां देशेऽभिधेये णिनिर्वृद्ध्यभावः षत्वं च निपात्यते। गुणैश्चित्ते विशेते विसिनोति वा विशयी विषयी च देशः। निपातनात् षत्वम्॥

इगुपधज्ञाप्रीकॄभ्यः कः॥ २०६॥

इगुपधेभ्यो धातुभ्यो ज्ञाप्रीकॄभ्यश्च कर्तरि कः प्रत्ययो भवति। ककारः कित्कार्यार्थः। विक्षिपः। विलिखः। ज्ञः। प्रियः। उत्किरः।

वासरूपविधिना विक्षेपकः विक्षेप्तेति ण्वुल्तृचौ भवतः । अच्च न भवति गुपादीनामिगुपधानां च पचादिषूपदेशात् सरूपोऽप्यच् पक्षे भवति ॥

गिरो लश्च ॥ २०७ ॥

गिरतेः कर्तरि को भवति । लश्च गिर आदेशो भवति । गिरतीति गिलः ॥

आतश्चोपसर्गे ॥ २०८ ॥

आकारान्ताच्च धातोरुपसर्ग उपपदे कप्रत्ययो भवति । णस्यापवादः । प्रस्थः । सुग्लः । सुम्लः । व्यालः ॥

प्रसारिणो डः ॥ २०९ ॥

प्रसारणमस्यास्तीति प्रसारी धातुः । तत आकारान्तादुपसर्ग उपपदे कर्तरि डप्रत्ययो भवति । कस्यापवादः । संप्यः । परिप्यः । प्रज्यः । अनुज्यः । डकारष्टिलोपार्थः ॥

व्याघ्राघ्रे प्राणिनासिकयोः ॥ २१० ॥

व्याघ्र आघ्रा इत्येतौ शब्दौ जिघ्रतेः कर्तरि डप्रत्ययान्तौ निपात्येते । विविधमाजिघ्रतीति व्याघ्रः प्राणी । आजिघ्रतीत्याघ्रा नासिका । शस्यापवादः ॥

पाघ्राध्माधेट्दृशिभ्यः शः ॥ २११ ॥

पिबत्यादिभ्यो धातुभ्यः कर्तरि शप्रत्ययो भवति । घ्रातिसाहचर्यात् पिबतेर्ग्रहणं, न पातेः । पिबतीति पिबः उत्पिबः । जिघ्रः उज्जिघ्रः । धमः उद्धमः । धयः उद्धयः । पश्यः उत्पश्यः । शकारः सार्वधातुकार्थः ॥

धारिपारिवेद्युदेजिचेतिसातिसाहिविन्दिभ्योऽनुपसर्गेभ्यः [॥ २१२ ॥

धार्यादिभ्यो ण्यन्तेभ्यो विन्दतेश्चानुपसर्गेभ्यः कर्तरि शप्रत्ययो भवति । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातयः । साहयः । विन्दः । अनुपसर्गेभ्य इति किम् । सम्प्रधारकः । प्रवेदकः । सातिः सौत्रो धातुः ॥

लिपश्च ॥ २१३ ॥

लिपेश्च कर्तरि शप्रत्ययो भवति। लिम्पतीति लिम्पः। अनुपसर्गादित्येव। प्रलिपः ॥

नौ संज्ञायाम् ॥ २१४ ॥

लिपेर्नावुपपदे संज्ञायां शप्रत्ययो भवति। निलिम्पाः नाम देवाः। संज्ञायामिति किम्। निलिपः ॥

गवादिषु विन्देः ॥ २१५ ॥

विन्दतेर्गवादिषूपपदेषु कर्तरि शप्रत्ययो भवति। गां विन्दतीति गोविन्दः। कुविन्दः। अरविन्दः। कुरुविन्दः ॥

दाञ्धाञोर्वा ॥ २१६ ॥

दाञ्धाञोः कर्तरि शप्रत्ययो वा भवति। ददातीति ददः। दायः। दधातीति दधः धायः। ददधोरचा सिद्धे दाधोः शविधानम् 'अच्कावशक्तम्' इत्यन्तोदात्तत्वबाधनार्थम्। तेन अददः अदधः इति नञ्स्वर एव भवति। अनुपसर्गादित्येव। प्रदः। प्रधः ॥

ज्वलादिदुनीभूभ्यो णः ॥ २१७ ॥

ज्वलादयो वृत्परिच्छिन्नाः 'ज्वल दीप्तावि'त्यत आरभ्य 'कस गतावि'ति यावत्। तेभ्यो दु नी भू इत्येतेभ्यश्चानुपसर्गेभ्यः कर्तरि णप्रत्ययो वा भवति। ज्वलः ज्वालः। चलः चालः। जलं जालम्। टलः टालः। *ह्वलः ह्वालः। स्थलं स्थालम्। हलं हालम्। नदं नादम्। वलः वालः। घलः घालः। कुलं कोलः। सलः सालः। हलः हालः। पतः पातः। बहुलवचनान्निपातः। पथः पाथः। क्वथः क्वाथ। मथः माथः। भ्रमः भ्रामः। भ्रमण इति भ्रम एव। क्षरः क्षारः। सहः साहः। रमा रामा। सदः सादः। क्रुशः क्रोशः। बहुलवचनादुत्क्रोशः। कुचः कोचः। बुधः बोधः। युधः योधः। रुहः रोहः। कुशः कोशः (?)। दवः दावः। नयः नायः। भवः भावः। णकारो वृद्ध्यर्थः ॥

---

* इत आरभ्य प्रदर्श्यमाना ज्वलादयस्तु क्वचित् क्वचिदन्यथा दृश्यन्ते।

लिहिश्लि(षा? व्या)द्ध्याधिश्वसितनीणूभ्यः[1] ॥ २१८ ॥

लिहिश्लिषिभ्यामाकारान्तेभ्यो व्यधादिभ्यश्च धातुभ्यः कर्तरि णप्रत्ययो भवति। लेहः। श्लेषः। दायः। धायः। व्याधः। श्वासः। अवतानः उत्तानः। प्रत्यायः अन्तरायः ॥

दूरेक्षणेफलेषु पचेः कर्मकर्तर्युश्चास्य वा ॥ २१९॥

दूरे क्षणे फले इत्येतेषु सप्तम्यन्तेषूपपदेषु पचेः कर्मकर्तरि णप्रत्ययो भवति उश्चास्य वा। दूरेपाकः दूरेपाकुः। दूरेपच्यते स्वयमेव। क्षणेपाकः क्षणेपाकुः। फलेपाकः फलेपाकुः। 'सप्तम्यास्तत्पुरुषे कृति बहुलमि'ति सप्तम्या अलुक्। स्त्रियां दूरेपाकः (?)। 'पचेर्दूरादिभ्यो ण' इति कुत्वम् ॥

उपसर्गे श्यः ॥ २२० ॥

उपसर्ग उपपदे श्यायतेर्णप्रत्ययो भवति। अवश्यायः। प्रतिश्यायः। कस्यापवादोऽयम् ॥

अवे हृसाभ्याम् ॥ २२१ ॥

अवे उपपदे हृ सा इत्येताभ्यां कर्तरि णप्रत्ययो भवति। अवहारः अवसायः ॥

समाङोः स्रुवोर्वा[2] ॥ २२२ ॥

सम्याङि चोपपदे स्रुवो धातोर्णप्रत्ययो वा भवति संस्रवः संस्रावः। आस्रवः आस्रावः ॥

ग्रहः ॥ २२३ ॥

ग्रहेर्धातोः कर्तरि णप्रत्ययो वा भवति। व्यवस्थितविभाषेयम्। तेन ग्राहो मकरादिः। ग्रहः सूर्यादिः ॥

गेहे कः ॥ २२४ ॥

गेहेऽभिधेये ग्रहेः कप्रत्ययो भवति। कित्करणं सम्प्रसारणार्थम्। गृहं सद्म। उपचारात् गृहा दाराः ॥

गस्थकन् ॥ २२५ ॥

---

१. 'ध' क. पाठः. २. 'वा। गायतेः कर्तरि थकन्' ख. पाठः.

गायतेः कर्तरि थकन्प्रत्ययो भवति । गायतीति गाथकः । नकारः स्वरार्थः ॥

ण्युट् च ॥ २२६ ॥

गायतेः कर्तरि ण्युट् च भवति । गायनः । गायनी । णकारो युगर्थः वृद्ध्यर्थः । टकारो ङीबर्थः ॥

हाकूहाङ्भ्यां व्रीहिकालयोः ॥ २२७ ॥

जहातेर्जिहीतेश्च यथासङ्ख्यं व्रीहिकालयोः कर्त्रोरभिधेययोर्ण्युट् भवति । जहत्युदकमिति हायना नाम व्रीहयः । जिहीते भावानिति हायनः संवत्सरः ॥

रञ्जिनृतिखनिभ्यः शिल्पिनि ष्वुन् ॥ २२८ ॥

एभ्यः कर्तरि ष्वुन्प्रत्ययो भवति । षकारो ङीषर्थः । नकारः स्वरार्थः । रजकः रजकी । 'रञ्जेः ष्वुन्विनुणुन्घुङ्सुणनिषु चे'त्यनुनासिकलोपः । नर्तकः नर्तकी । खनकः खनकी । शिल्पिनीति किम् । रञ्जकः । (षकारो ङीषर्थः ?) ॥

प्रुल्वृसृभ्यः साधुकारिणि वुन् ॥ २२९ ॥

प्रवादिभ्यो धातुभ्यः साधुकारिणि कर्तरि वुन्प्रत्ययो भवति । साधु प्रवते प्रवकः । लवकः । सरकः । साधुकारिणीति किम् । प्रविता । (प्रवितः ? लविता) सर्ता ॥

आशिषि च ॥ २३० ॥

आशिषि गम्यमानायां धातोः कर्तरि वुन्प्रत्ययो भवति । जीवतात् जीवकः । नन्दतात् नन्दकः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

१. 'ट् ॥ ह्राह्राङ्भ्यो व्री', २. 'त्रु' ख. पाठः.

अथ चतुर्थः पादः ।

कर्मण्यण् ॥ १ ॥

निर्वर्त्यविकार्यप्राप्यलक्षणे कर्मण्युपपदे धातोः कर्तर्यण्प्रत्ययो भवति । निर्वर्त्ये कुम्भकारः । विकार्ये काण्डलावः । प्राप्ये वेदाध्यायः । आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छति इत्यादावनभिधानान्न भवति । निर्वर्त्यविकार्ययोरपि क्वचिन्न भवति । संयोगं जनयति । कन्यां मुण्डयतीत्यादि । णकारो वृद्ध्यर्थः ॥

ह्वावामश्च ॥ २ ॥

ह्वादिभ्यश्च कर्मण्युपपदे कर्तर्यण्प्रत्ययो भवति । स्वर्गह्वायः । तन्तुवायः । धान्यं मिमीते मयते वा धान्यमायः । वातिवायत्योर्मातेश्चाकर्मकत्वात् कर्मोपपदं न सम्भवतीति न भवति । कस्यापवादः ॥

शीलिकामिभक्ष्याचरीक्षिक्षमिभ्यो णः ॥ ३ ॥

शील्यादिभ्यः कर्मण्युपपदे कर्तरि णप्रत्ययो भवति । मांसं शीलयतीति मांसशीलः । मांसकामः । मांसभक्षः । कल्पाचारः । सुखप्रतीक्षः । बहुक्षमः । प्रत्ययान्तरकरणं ङीबभावार्थम् । तेन मांसशीला इत्यादि । शीलादिभिर्घञन्तैर्बहुव्रीहौ सति मांसशीलेत्यादिरूपे सिद्धेऽपि मांसं शीलयतीत्यादिवाक्येऽणि सति स्त्रियां ङीप् मा भूदिति वचनम् ॥

आतोऽनुपसर्गात् कः ॥ ४ ॥

आकारान्तात् अनुपसर्गाद् धातोः कर्मण्युपपदे कर्तरि कप्रत्ययो भवति । अणोऽपवादः । गोदः । कम्बलदः । अनुपसर्गादिति किम् । गोसन्दायः । ककारः कित्कार्यार्थः ॥

समः ख्यः ॥ ५ ॥

समः परात् ख्याधातोः कर्मण्युपपदे कर्तरि कप्रत्ययो भवति । गाः सङ्ख्याति सञ्चष्टे यः गोसङ्ख्यः । सोपसर्गार्थ आरम्भः ॥

आङो दश्च ॥ ६ ॥

आङ्पराद् ददातेः ख्यातेश्च कर्मण्युपपदे कप्रत्ययो भवति । दायादः प्रियाख्यश्च ॥

प्रात् ज्ञश्च ॥ ७ ॥

प्रात् पराद् ददातेर्जानातेश्च कर्मण्युपपदे कर्तरि कप्रत्ययो भवति । प्रपाप्रदः । पथिप्रज्ञः ॥

सुपि स्थापास्नात्राभ्यः ॥ ८ ॥

सुबन्त उपपदे स्थादिभ्यः कर्तरि कप्रत्ययो भवति । समस्थः । पादपः । नदीष्णः । आतपत्रम् । इत उत्तरं कर्मणि सुपीति चाधिक्रियते ॥

मूलविभुजोर्वीरुहकुमुदमहीध्रोषर्बुधादयः ॥ ९ ॥

एते कप्रत्ययान्ता निपात्यन्ते । मूलानि विभुजति मूलविभुजो रथः । उर्व्यां रोहति उर्वीरुहो वृक्षः । कौ मोदते कुमुदं कैरवम् । महीं धरति महीध्रः शैलः । उषसि बुध्यते उषर्बुधः अग्निः । आदिग्रहणादपो बिभर्ति अभ्रं मेघः ॥

नखमुचकाकगुहौ हेतुकर्मणोः ॥ १० ॥

नखमुचकाकगुहशब्दौ यथासङ्ख्यं हेतुकर्मणोः कप्रत्ययान्तौ निपात्येते । नखान्मोचयन्ति नखमुचानि धनूंषि । काकेभ्यो गूहनीयाः काकगुहास्तिलाः ॥

शोकापनुदतुन्दपरिमृजावानन्दकरालसयोः ॥ ११ ॥

शोकापनुदतुन्दपरिमृजौ यथासङ्ख्यम् आनन्दकरालसयोः कप्रत्ययान्तौ निपात्येते । शोकमपनुदति शोकापनुदः पुत्रादिरानन्दकर उच्यते । शोकापनोदोऽन्यः । तुन्दं परिमार्ष्टि तुन्दपरिमृजोऽलसः । तुन्दपरिमार्जोऽन्यः ॥

हृञोऽज् वयोनुद्यमनयोः ॥ १२ ॥

हरतेः कर्मण्युपपदे वयसि अनुद्यमने च गम्यमाने कर्तर्यच्प्रत्ययो भवति । अणोऽपवादः । कवचहरः कुमारः । मनोहरः प्रासादः । वयोनुद्यमनयोरिति किम् । भारहारः । वयोग्रहणमुद्यमनार्थम् ॥

आङस्ताच्छील्ये ॥ १३ ॥

ताच्छील्यं स्वाभाविकी फलनिरपेक्षा वृत्तिः । आङ्पराद्धरतेर्धातोः कर्मण्युपपदे ताच्छील्ये गम्यमाने कर्तर्यच्प्रत्ययो भवति । अणोऽपवादः । पुष्पाण्याहरतीत्येवंशीलः पुष्पाहरः । फलाहरः । पुष्पाद्याहरणे स्वाभाविकी फलनिरपेक्षा वृत्तिरस्येत्यर्थः । ताच्छील्य इति किम् । पुष्पाहारः ॥

अर्हः ॥ १४ ॥

अर्हतेर्धातोः कर्मण्युपपदेऽच्प्रत्ययो भवति । पूजामर्हति पूजार्हः । पूजार्हा ॥

स्तम्बकर्णयो रमिजपिभ्यां हस्तिसूचकयोः ॥ १५ ॥

स्तम्बकर्णयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपिभ्यामेव हस्तिसूचकयोरर्थयोरच्प्रत्ययो भवति । स्तम्बे रमते स्तम्बेरमो हस्ती । कर्णे जपति कर्णेजपः सूचकः । 'हलदन्तात् सप्तम्या अलुक्' । हस्तिसूचकयोरिति किम् । स्तम्बेरन्ता । कर्णेजपिता ॥

घटघटीधनुर्दण्डर्षि[1]त्सरुलाङ्गलाङ्कुशशक्तितोमरेषु ग्रहः ॥ १६ ॥

घटादिषु कर्मसूपपदेषु ग्रहेर्धातोः कर्तर्यच्प्रत्ययो भवति । घटं गृह्णाति घटग्रहः । घटीग्रहः । धनुर्ग्रहः । दण्डग्रहः । ऋषिग्रहः । त्सरुग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । शक्तिग्रहः । तोमरग्रहः । एतेष्विति किम् । पाणिग्राहः ॥

सूत्रे च धार्यर्थे ॥ १७ ॥

सूत्रे चोपपदे धार्यर्थे वर्तमानात् ग्रहेः कर्तर्यच्प्रत्ययो भवति । सूत्रं गृह्णाति सूत्रग्रहः । सूत्रं धारयतीत्यर्थः । सूत्रग्राहोऽन्यः ॥

प्रहरणादिष्वदण्डादिषु धृञः ॥ १८ ॥

प्रहरणादिषु दण्डादिवर्जितेषु कर्मसूपपदेषु धृञो धातोः कर्तर्यच्प्रत्ययो भवति । धनुर्धरः । शक्तिधरः । चक्रधरः । वज्रधरः । शूलधरः ।

१. 'यष्टित्स' ख पाठः.

हलधरः । आदिग्रहणात् भूधरः । जलधरः । विषधरः । शशधरः । विद्याधरः । पयोधर इति । अदण्डादिष्विति किम् । दण्डधारः । कुण्डधारः । काण्डधारः । कर्णधारः । सूत्रधारः । छत्रधारः ॥

शमि धातोः संज्ञायाम् ॥ १९ ॥

धातोः शम्युपपदे संज्ञायां कर्तर्यच्प्रत्ययो भवति । शङ्करः । सङ्करः । सन्नदः । सम्भवः(१)। धातुग्रहणाद्धेत्वादिषु कृन्नष्टं बाधते । शङ्करा नाम परिव्राजिका । शङ्करा नाम शकुनिका तच्छीला ॥

किंयत्तद्बहुषु कृञः ॥ २० ॥

किमादिषु कर्मसूपपदेषु कृञो धातोः कर्तर्यच्प्रत्ययो भवति । किङ्करः किङ्करा । यत्करः यत्करा । तत्करः तत्करा । बहुकरः बहुकरा ॥

शीङः पार्श्वादौ करणे ॥ २१ ॥

शीङो धातोः पार्श्वादौ करणे सुबन्त उपपदे कर्तर्यच्प्रत्ययो भवति । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः ॥

उत्तानादौ कर्तरि ॥ २२ ॥

उत्तानादौ कर्तृवाचिनि सुबन्त उपपदे शीङः कर्तर्यच्प्रत्ययो भवीत । उत्तानः शेते उत्तानशयः । ऊर्ध्वशयः । अवमूर्धशयः ॥

दिग्धसहे च ॥ २३ ॥

(दिग्धसहे च) सुप्युपपदे शीङः कर्तर्यच्प्रत्ययो भवति । दिग्धेन सह शेते दिग्धसहशयः ॥

अधिकरणे ॥ २४ ॥

अधिकरणवाचिनि सुबन्त उपपदे शीङः कर्तर्यच्प्रत्ययो भवति । खे शेते खशयः । गर्तशयः । बिलेशयः । हृच्छयः । मनसिशयः । कुशेशयः । 'हलदन्तात् सप्तम्या अलुक्' इति सप्तम्या अलुक् ॥

गिरौ डित् ॥ २५ ॥

१. 'स' ख. पाठः.

गिरावधिकरणवाचिन्युपपदे शीङः कर्तर्यच्प्रत्ययो डित् भवति । गिरौ शेते गिरिशः ॥

चरेष्टः ॥ २६ ॥

चरे अधिकरणवाचिनि सुबन्त उपपदे कर्तरि टप्रत्ययो भवति । कुरुषु चरति कुरुचरः । मद्रचरः । कुरुचरी । प्रत्ययान्तरकरणं ङीबर्थम् ॥

भिक्षासेनादायेषु च ॥ २७ ॥

अनधिकरणार्थ आरम्भः । भिक्षादिषु चोपपदेषु चरेः कर्तरि टप्रत्ययो भवति । भिक्षां चरति भिक्षाचरः । सेनाचरः । आदायचरः । एतेष्विति किम् । कुरूंश्चरति ॥

पुरोग्रतोग्रेषु सर्त्तेः ॥ २८ ॥

पुरःप्रभृतिषु सुबन्तेषूपपदेषु सर्तेः कर्तरि टप्रत्ययो भवति । पुरस्सरः । अग्रतस्सरः । अग्रेसरः । अग्रे इति निपातनादलुक् । एकारान्तमव्ययं वा ॥

पूर्वे कर्तरि ॥ २९ ॥

पूर्वशब्दे कर्तृवाचिनि सुबन्त उपपदे सर्तेष्टप्रत्ययो भवति । पूर्वः सरति पूर्वसरः । पूर्वसरी । कर्तरीति किम् । पूर्वं देशं सरति ॥

कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ ३० ॥

कृञो धातोर्हेतुताच्छील्यानुलोम्येषु गम्यमानेषु शब्दादिवर्जिते कर्मण्युपपदे कर्तरि टप्रत्ययो भवति । अणोऽपवादः । हेतुरैकान्तिकं कारणम् । विद्या यशस्करी । कन्या शोककरी । ताच्छील्यं तत्स्वभावता । क्रीडाकर । श्राद्धकरः । आनुलोम्यमनुकूलता । प्रैषकरः । वचनकरः । अशब्दादिष्विति किम् । शब्दकारः श्लोककार इत्यादिष्वणेव ॥

आद्यन्तानन्तकार(कर ?)बाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुस्सङ्ख्यादिवसदिनरजनिदोषाक्षपाक्षणदासु च ॥ २१ ॥

आद्यादिषु कर्मसूपपदेषु कृञो धातोः कर्तरि टप्रत्ययो भवति । अहेत्वाद्यर्थं आरम्भः । आदिं करोति आदिकरः । अन्तकरः । अनन्तकरः । कारकरः । बाहुकरः । अहस्करः । दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । चित्रकरः । कर्तृकरः । नान्दीकरः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । क्षेत्रकरः । जङ्घाकरः । धनुष्करः । अरुष्करः । एककरः । द्विकरः । दिवसकरः । दिनकरः । रजनिकरः । दोषाकरः । क्षपाकरः । क्षणदाकरः ॥

भृतौ कर्मशब्दे ॥ २२ ॥

करोतेः कर्मशब्दे कर्मण्युपपदे भृतौ गम्यमानायां टप्रत्ययो भवति । भृतिर्वेतनं निर्वेशः कर्ममूल्यमिति यावत् । कर्म करोति कर्मकरः । कर्मकरी । भृताविति किम् । कर्मकारः । शब्दग्रहणं स्वरूपार्थम् । अन्यथा प्रत्ययार्थः कर्म स्यादिति ॥

स्तम्बशकृतोरिन् व्रीहिवत्सयोः ॥ २३ ॥

कृञो धातोः स्तम्बशकृतोः कर्मणोरुपपदयोर्यथासङ्ख्यं व्रीहिवत्सयोः कर्त्रोरिन् प्रत्ययो भवति । स्तम्भकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोरिति किम् । स्तम्बकारः । शकृत्कारः । नकारः स्वरार्थः ॥

हरतेर्दृतिनाथयोः पशौ ॥ २४ ॥

हरतेर्धातोर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्तरीन्प्रत्ययो भवति । दृतिहरिः पशुः । नाथहरिः पशुः । पशाविति किम् । दृतिहारः । नाथहारः ॥

फलेमलरजस्सु ग्रहेः ॥ २५ ॥

---

* 'बह्व' इति वृत्तिकारादयो मन्यन्ते ।

ग्रहेर्धातोः फलादिषु कर्मसूपपदेषु कर्तरीन्प्रत्ययो भवति । फलानि गृह्णाति फलेग्रहिः वृक्षः । निपातनादेत्वम् । मलग्रहिः कम्बलः । रजोग्रहिः कञ्चुकः । मलरजसोः केचिदेवेच्छन्ति ॥

देववातयोरापेः ॥ ३६ ॥

देववातयोः कर्मणोरुपपदयोः आपेर्धातोः कर्तरि इन्प्रत्ययो भवति । देवमाप्नोति देवापिः । वातापिः ॥

आत्मोदरकुक्षिषु भृञः खिन् ॥ ३७ ॥

आत्मादिषु कर्मसूपपदेषु भृञो धातोः कर्तरि खिन्प्रत्ययो भवति । आत्मानमेव बिभर्ति आत्मम्भरिः । उदरम्भरिः । कुक्षिम्भरिः । उदरम्भीरिरिति केचिदेवेच्छन्ति । खकारो मुमर्थः ॥

एजेः खश् ॥ ३८ ॥

एजयतेः कर्मण्युपपदे कर्तरि खश्प्रत्ययो भवति । जनमेजयति जनमेजयः । अङ्गमेजयः । खकारो मुमर्थः । शकारः सार्वधातुकार्थः ॥

शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः ॥ ३९ ॥

शुन्यादिषु कर्मसूपपदेषु धेटो धातोः कर्तरि खश्प्रत्ययो भवति । शुनिन्धयः । स्तनन्धयः । मुञ्जन्धयः । कूलन्धयः । आस्यन्धयः । पुष्पन्धयः । धेटष्टकारो ङीबर्थः । शुनिन्धयी । स्तनन्धयी । मुञ्जादिषु केचिदेवेच्छन्ति ॥

नासिकानाडीघटीखरीमुष्टिषु च ॥ ४० ॥

नासिकादिषु कर्मसूपपदेषु धेटः कर्तरि खश्प्रत्ययो भवति । नासिकन्धयः । नाडिन्धयः । घटिन्धयः । खरिन्धयः । मुष्टिन्धयः । योगविभाग उत्तरार्थः ॥

ध्मः पाणिकरवातेषु च ॥ ४१ ॥

ध्मो धातोः पाणिकरवातेषु नासिकादिषु चोपपदेषु कर्तरि खश्-प्रत्ययो भवति। पाणिन्धमः। करन्धमः। वातन्धमः। नासिकन्धमः। नाडिन्धमः। घटिन्धमः। खरिन्धमः। मुष्टिन्धमः॥

उदो रुजिवहिभ्यां कूले ॥ ४२ ॥

उदः पराभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे कर्तरि खश्प्रत्ययो भवति। कूलमुद्रुजः। कूलमुद्वहः॥

वहाभ्रयोर्लिहः ॥ ४३ ॥

वहाभ्रयोः कर्मणोरुपपदयोः लिहेर्धातोः कर्तरि खश्प्रत्ययो भवति। वहंलिहो गौः। अभ्रंलिहः पर्वतः॥

परिमाणार्थमितनखेषु पचः ॥ ४४ ॥

परिमाणार्थाः प्रस्थादयः। तेषूपपदेषु मितनखयोश्च पचेर्धातोः कर्तरि खश्प्रत्ययो भवति। प्रस्थंपचा स्थाली। द्रोणंपचा दासी। मितंपचा ब्राह्मणी। नखंपचा यवागूः॥

बहुविध्वरुस्तिलेषु तुदः ॥ ४५ ॥

बह्वादिषु कर्मसूपपदेषु तुदेर्धातोः कर्तरि खश्प्रत्ययो भवति। बहुन्तुदः। (विधुन्तुदः।) अरुन्तुदः। तिलन्तुदः। वहः केचिदेवे-च्छन्ति॥

वातशर्धयोरजिजहातिभ्याम् ॥ ४६ ॥

वातशर्धयोः कर्मणोरुपपदयोरजिजहातिभ्यां कर्तरि खश्प्रत्ययो भवति। वातमजा मृगाः। शर्धंजहा माषाः॥

असूर्योग्रयोर्दृशः ॥ ४७ ॥

असूर्योग्रयोः कर्मणोरुपपदयोर्दृशेः खश्प्रत्ययो भवति। सूर्यमपि न पश्यन्ति असूर्यम्पश्या राजदाराः। दृशिना सम्बद्धस्य नञः सूर्येण सहा-

सामर्थ्येऽपि गमकत्वात् समासः । 'सूर्यम्पश्यापुनर्गेयाश्राद्धभोज्यालवणभोज्यादयश्चे'ति समासः । उग्रं पश्यति उग्रम्पश्यः ॥

प्रियवशयोर्वदः ॥ ४८ ॥

प्रियवशयोः कर्मणोरुपपदयोर्वदेर्धातोः कर्तरि खश्प्रत्ययो भवति । प्रियं वदति प्रियंवदः । वशंवदः ॥

ललाटे तपः ॥ ४९ ॥

ललाटे कर्मण्युपपदे तपेर्धातोः कर्तरि खश्प्रत्ययो भवति । ललाटं तपति ललाटन्तपः सूर्यो वर्तते ॥

तापेर्द्विषत्परयोर्णिलुक् च ॥ ५० ॥

तापेर्ण्यन्तात् द्विषत्परयोः कर्मणोरुपपदयोः कर्तरि खश्प्रत्ययो भवति । णिलुक् च । द्विषन्तं तापयति द्विषन्तपः । परन्तपः । द्विषततिताप इति बहुलाधिकारादणेव भवति ॥

पुरन्दरभगन्दरौ संज्ञायाम् ॥ ५१ ॥

पुरन्दर भगन्दर इत्येतौ शब्दौ संज्ञायां खश्प्रत्ययान्तौ निपात्येते । पुरं दारयतीति पुरन्दरः शक्रः । भगं दारयतीति भगन्दरो व्याधिः । दृणातेर्णिलुक् उपपदस्य चादन्तत्वं निपात्यते ॥

इरम्मदश्च ॥ ५२ ॥

इरम्मद इति माद्यतेरिराशब्दे तृतीयान्त उपपदे खश्श्यनभावौ निपात्येते । इरया माद्यति इरम्मदो वैद्युतोऽग्निः ॥

वाचंयमो व्रते ॥ ५३ ॥

व्रतमिति शास्त्रिको नियमः । तस्मिन् गम्यमाने यच्छतेर्वाक्छब्दे कर्मण्युपपदे खश्प्रत्ययश्छत्वाभावः पूर्वपदस्य चाकारान्तत्वं निपात्यते । वाचं यच्छति वाचंयमो मुनिः । व्रत इति किम् । वाग्यामः ॥

सर्वे सहः ॥ ५४ ॥

सर्वशब्दे कर्मण्युपपदे सहेः कर्तरि खश्प्रत्ययो भवति । सर्वं सहते सर्वंसहा पृथिवी ॥

सर्वकूलाभ्रकरीषेषु च कषः ॥ ५५ ॥

सर्वकूलादिषु कर्मसूपपदेषु कषतेः कर्तरि खश्प्रत्ययो भवति । सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो गिरिः । करीषंकषा वात्या ॥

मेघर्त्तिभयाभयेषु कृञः खः ॥ ५६ ॥

मेघादिषु कर्मसूपपदेषु कृञो धातोः कर्तरि खप्रत्ययो भवति । मेघङ्करः । ऋतिङ्करः । भयङ्करः । अभयङ्करः । खशि प्रकृते खविधानं विकरणो मा भूदिति ॥

क्षेमप्रियभद्रमद्रेष्वण् च ॥ ५७ ॥

क्षेमादिषु कर्मसूपपदेषु कृञः कर्तर्यण्प्रत्ययो भवति । चकारात् खश्च । क्षेमकारः क्षेमंकरः । प्रियकारः प्रियङ्करः । भद्रकारः भद्रङ्करः । मद्रकारः मद्रङ्करः । वेति वक्तव्येऽण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम् ॥

आशिते भुवो भावकरणयोः ॥ ५८ ॥

आशितशब्दे सुबन्त उपपदे भवतेर्धातोर्भावे करणे चार्थे खप्रत्ययो भवति । आशितेन भूयते आशितम्भवं भवता । आशितो भवत्यनेन आशितम्भव ओदनः । आशित इत्यश्नोतेराङ्पूर्वादविवक्षिते कर्मण्यकर्मकत्वात् कर्तरि क्तः ॥

भृवृजितॄतपिदमिसहिभ्यः संज्ञायाम् ॥ ५९ ॥

बिभर्त्यादिभ्यो यथासम्भवं कर्मणि सुपि चोपपदे संज्ञायां विषये कर्तरि खप्रत्ययो भवति । विश्वं बिभर्ति विश्वम्भरा वसुधा । पतिंवरा कन्या । धनञ्जयः पार्थः । रथन्तरं साम । शत्रुन्तपो राजा । अरिन्दमः । शत्रुंसहः । संज्ञायामिति किम् । कुटुम्बं बिभर्ति कुटुम्बभारः ॥

धारेर्धर्च्च ॥ ६० ॥

धारयतेः कर्मण्युपपदे संज्ञायां विषये कर्तरि खप्रत्ययो भवति धर्चादेशः । युगन्धरः । वसुन्धरा ॥

सुतमितजनपूर्वहृदयतुरभुजप्रवप्लवेषु गमः ॥ ६१ ॥

सुतादिषु सुबन्तेषूपपदेषु गमेर्यथासम्भवं संज्ञायामसंज्ञायां च खप्रत्ययो भवति । सुतङ्गमो नाम मुनिः । यस्य सौतङ्गमिः पुत्रः । मितङ्गमा हस्तिनी । जनङ्गमश्चण्डालः । पूर्वङ्गमाः पन्थानः । हृदयङ्गमा वाक् । तुरं गच्छति तुरङ्गमः अश्वः । भुजं गच्छति भुजङ्गमः सर्पः । प्रवं गच्छति प्रवङ्गमः कपिः । प्लवं गच्छति प्लवङ्गमो भेकः ॥

विहायसो विह च ॥ ६२ ॥

विहायश्शब्दे सुबन्ते उपपदे गमेः खप्रत्ययो भवति । विहायश्शब्दस्य च विहादेशः । विहायसा गच्छति विहङ्गमः ॥

तुरादिषु ख(ट्[1]? ड्) च ॥ ६३ ॥

तुरादिषूपपदेषु गमेः कर्तरि ख(श् ? ड्) च भवति । तुरङ्गः । भुजङ्गः । प्रवङ्गः । प्लवङ्गः । विहङ्गः ॥

डश्च ॥ ६४ ॥

तुरादिषूपपदेषु गमेर्डश्च भवति । तुरगः । भुजगः । प्रवगः । प्लवगः । विहगः ॥

सर्वसर्वत्रात्यन्तानन्तपुरःप्रतीपग्रामगुरुतल्पादिषु च ॥ ६५ ॥

सर्वादिषु कर्मसु सुबन्तेषु चोपपदेषु गमेः कर्तरि डप्रत्ययो भवति । सर्वगः । सर्वत्रगः । अत्यन्तगः । अनन्तगः । पुरोगः । प्रतीपगः । ग्रामगः । गुरुतल्पगः । आदिग्रहणादन्येष्वपि यथाप्रयोगदर्शनमवगन्तव्यम् ॥

अग्रादिमध्यान्ताध्वदूरपारागारादिषु तदन्तेषु च ॥६६॥

---

१. 'श्' क. पाठः.

अग्रादिषु अग्राद्यन्तेषु च कर्मसु सुबन्तेषु चोपपदेषु गमेः कर्तरि डप्रत्ययो भवति। अग्रगः सेनाग्रगः। आदिगः पङ्क्त्यादिगः। मध्यगः गृहमध्यगः। अन्तगः शाखान्तगः। अध्वगः नगराध्वगः। दूरगः अदूरगः। पारगः वेदपारगः। अगारगः स्त्र्यगारगः। आदिग्रहणादन्येष्वपि द्रष्टव्यम्॥

खगागोरगपतगपन्नगनगापगाशुगादयः संज्ञायाम् ॥ ६७ ॥

खगादयो डप्रत्ययान्ता संज्ञायां निपात्यन्ते। खं गच्छति खगः पक्षी। न गच्छतीत्यगः पर्वतो वृक्षश्च। उरसा गच्छतीत्युरगः सर्पः। निपातनात् सलोपः। प(तो? तेन) गच्छति पतगः पक्षी। कथं पतङ्गः। 'पतितमित्युपल्भ्योऽङ्गादि'ति भविष्यति। पद्भ्यां न गच्छति पन्नं वा गच्छति पन्नगः सर्पः। न गच्छतीति नगः पर्वतो वृक्षश्च। आपमब्धि गच्छतीत्यापगा नदी। आशु गच्छतीत्याशुगः शरः। आदिग्रहणादन्येऽपि निम्नगासमुद्रगासततगादयोऽवगन्तव्याः। बहुलग्रहणादगो वृषलः शीतेनेत्यादावसंज्ञायामपि भवति॥

सुदुरोरधिकरणे॥ ६८ ॥

सुदुरोः सुबन्तयोरुपपदयोर्गमेरधिकरणेऽर्थे डप्रत्ययो भवति। सुखेन गम्यतेऽस्मिन्निति सुगः पन्थाः। दुर्गः पर्वतः। अधिकरण इति किम्। सुगन्ता दुर्गन्ता। ल्युडपवादोऽयम्। वासरूपविधिना सोऽपि भवति। सुगमनः दुर्गमनः इति॥

निसो देशे॥ ६९ ॥

निसः परात् गमेर्देशेऽधिकरणे डप्रत्ययो भवति। निर्गो देशः॥

आशिषि हनः॥ ७० ॥

हन्तेः कर्मण्युपपदे आशिषि गम्यमानायां कर्तरि डप्रत्ययो भवति। तिमिं वध्यात् तिमिहः। शत्रुहः॥

अपात् क्लेशतमसोः ॥ ७१ ॥

अपात् पराद्धन्तेः क्लेशतमसोः कर्मणोरुपपदयोः कर्तरि डप्रत्ययो भवति । क्लेशमपहन्ति क्लेशापहः । तमोपहः । अनाशीरर्थं आरम्भः ॥

दर्पज्वरदोषदुःखादिषु च ॥ ७२ ॥

दर्पादिषु कर्मसूपपदेषु अपात् पराद्धन्तेः कर्तरि डप्रत्ययो भवति । दर्पमपहन्ति दर्पापहः । ज्वरापहः । दोषापहः । दुःखापहः । आदिग्रहणात् रोगापह इत्यादयो द्रष्टव्याः ॥

दारावाङोऽणन्त्यस्य च टः संज्ञायाम् ॥ ७३ ॥

आङ्पराद्धन्तेर्दारुशब्दे कर्मण्युपपदे संज्ञायां विषये कर्तर्यण्प्रत्ययो भवति । हन्तेरन्त्यस्य च टकार आदेशः । दारु आहन्ति दार्वाघाटः पक्षिविशेषः ॥

चारौ वा ॥ ७४ ॥

चारुशब्दे कर्मण्युपपदे हन्तेराङ्पूर्वात् संज्ञायां कर्तर्यण्प्रत्ययो भवति । अन्त्यस्य च वा टकार आदेशः । चारु आहन्ति चार्वाघाटः शूरः । चार्वाघातः ॥

समश्च ॥ ७५ ॥

समः परात् हन्तेः कर्मण्युपपदे कर्तरि अण्प्रत्ययो भवति । अन्त्यस्य च वा टकार आदेशः । वर्णान् संहन्ति वर्णसङ्घाटः वर्णसङ्घातः । पदसङ्घाटः पदसङ्घातः ॥

कुमारशीर्षयोर्णिनिः ॥ ७६ ॥

कुमारशीर्षयोः कर्मणोरुपपदयोर्हन्तेर्धातोः कर्तरि णिनिप्रत्ययो भवति । कुमारं हन्ति कुमारघाती । शिरो हन्ति शीर्षघाती । निपातनात् शिरसः शीर्षभावः प्रकृत्यन्तरं वा ॥

---

१. 'षु ॥' क. पाठः. २. 'न्त' ख. पाठः.

टग् लक्षणे जायापत्योः ॥ ७७ ॥

जायापत्योः कर्मणोरुपपदयोर्हन्तेर्धातोर्लक्षणे कर्तरि टक्प्रत्ययो भवति। जायाघ्नस्तिलकः। पतिघ्नी पाणिरेखा। ककारः कित्कार्यार्थः। टकारो ङीबर्थः॥

लक्षणवति च ॥ ७८ ॥

लक्षणवति चार्थे यथोक्तोपपदाद्धन्तेष्टक् भवति। जायाघ्नो ब्राह्मणः। पतिघ्नी वृषली॥

अचित्तवति ॥ ७९ ॥

कर्मण्युपपदे हन्तेर्धातोरचित्तवति कर्तरि टक्प्रत्ययो भवति। वातघ्नं तैलम्। पित्तघ्नं घृतम्। श्लेष्मघ्नं मधु। रोगघ्नमौषधम्। अचित्तवतीति किम्। चोरघातो राजा। आखुघातः शूद्रः। मत्स्यघातो बकः। सस्यघातो वृषभः॥

ब्रह्मकृतशत्रुवृत्रादिषु च ॥ ८० ॥

ब्रह्मादिषूपपदेषु हन्तेष्टक्प्रत्ययो भवति। ब्रह्मघ्नः। कृतघ्नः। शत्रुघ्नः। वृत्रघ्नः। आदिग्रहणाद् बालघ्नादयोऽपि भवन्ति। चित्तवत्कर्त्रर्थं आरम्भः॥

हस्तघ्नस्रुघ्नशतघ्नीसमघ्न्यादयः संज्ञायाम् ॥ ८१ ॥

एते शब्दाः संज्ञायां टगन्ता निपात्यन्ते। हस्तघ्नो ज्याघातो वर्मपट्टः। स्रुघ्नं नगरम्। शतघ्नी आयुधविशेषः। समघ्नी पक्षिविशेषः। आदिग्रहणादन्येऽपि शिष्टप्रयोगतोऽवगन्तव्याः॥

गोघ्नः सम्प्रदाने च ॥ ८२ ॥

गोघ्न इत्ययं शब्दः सम्प्रदाने कर्तरि च टक्प्रत्ययान्तो निपात्यते। गां हन्ति तस्मै आगताय दातुमिति गोघ्नोऽतिथिः। गां हन्ति गोघ्नः पातकी॥

हस्तिबाहुकपाटेषु शक्तौ ॥ ८३ ॥

---

१. 'शशघ्न्या' ख. पाठः.

हस्त्यादिषु कर्मसूपपदेषु शक्तौ गम्यमानायां हन्तेष्टक्प्रत्ययो भवति । चित्तवत्कर्त्रर्थ आरम्भः । हस्तिनं हन्तुं शक्तः हस्तिघ्नो मनुष्यः । बाहुघ्नो मल्लः । कपाटघ्नो भटः । शक्ताविति किम् । हस्तिघातो रसदः ॥

नगरे चाहस्तिनि ॥ ८४ ॥

नगरे च कर्मण्युपपदे हन्तेरहस्तिनि कर्तरि टक्प्रत्ययो भवति । नगरघ्नो व्याघ्रः । अहस्तिनीति किम् । नगरघातो हस्ती ॥

पाणिघताडघौ शिल्पिनि ॥ ८५ ॥

पाणि(घ?)ताड(घ?)योः कर्मणोरुपपदयोः शिल्पिनि कर्तरि हन्तेष्टक्प्रत्ययष्टिलोपो घत्वं च निपात्यते । पाणिं हन्ति पाणिघः शिल्पी । ताडघः । शिल्पिनीति किम् । पाणिघातः । ताडघातः ॥

राजघः ॥ ८६ ॥

राजघ इत्ययं शब्दः कर्तरि टक्प्रत्ययान्तो निपात्यते । राजानं हन्ति राजघः ॥

गायोऽनुपसर्गात् ॥ ८७ ॥

गायतेरनुपसर्गात् कर्मण्युपपदे कर्तरि टक्प्रत्ययो भवति । कस्यापवादः । साम गायति सामगः । वक्त्रगः । अनुपसर्गादिति किम् । सामसङ्गायः ॥

सुराशीध्वोः पिबः ॥ ८८ ॥

सुराशीध्वोः कर्मणोरुपपदयोः पिबतेर्धातोः कर्तरि टक्प्रत्ययो भवति । सुरां पिबति सुरापः सुरापी । शीधुपः शीधुपी । सुराशीध्वोरिति किम् । क्षीरपा ब्राह्मणी । पिबतिनिर्देशादिह न भवति । सुरां पाति सुरापा ॥

आढ्यसुभगस्थूलपलितनग्नान्धप्रियतदन्तेष्वच्विष्वभूततद्भावे भुवः खिष्णुच्खुकञौ ॥ ८९ ॥

आढ्यादिष्वाढ्यान्तेषु चाभूततद्भावविषयेषु (षष्ठ्च? अच्व्य)न्तेषु सुबन्तेषूपपदेषु भवतेर्धातोः कर्तरि खिष्णुच्खुकञौ प्रत्ययौ भवतः । अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः आढ्यम्भावुकः । सुभगंभविष्णुः

सुभगंभावुकः । स्थूलंभविष्णुः स्थूलंभावुकः । पलितंभविष्णुः पलितंभावुकः । नग्नंभविष्णुः नग्नंभावुकः । अन्धंभविष्णुः अन्धम्भावुकः । प्रियम्भविष्णुः प्रियम्भावुकः । एवमनाढ्यंभविष्णुः अनाढ्यंभावुकः इत्यादि । 'न प्रातिपदिकेने'ति तदन्तविधिनिषेधात् तदन्तग्रहणम् । अच्व्यिति किम् । आढ्यीभविता । अभूततद्भाव इति किम् । आढ्यो भविता ॥

## कृञः करणे ख्युन् ॥ ९० ॥

आढ्यादिषु तदन्तेषु च अभूततद्भावविषयेष्वच्व्यन्तेषु कर्मसूपपदेषु करोतेर्धातोः करणे कारके ख्युन्प्रत्ययो भवति । अनाढ्यम् आढ्यं कुर्वन्त्यनेनेति आढ्यंकरणम् । सुभगंकरणम् । स्थूलङ्करणम् । पलितंकरणम् । नग्नंकरणम् । अन्धंकरणम् । प्रियङ्करणम् । एवं तदन्तेष्वनाढ्यंकरणं स्वाढ्यंकरणमित्यादि । अच्व्यन्तेष्विति किम् । आढ्यीकुर्वन्त्यनेन । ल्युट् कस्मान्न भवति । यदि स्यादच्व्यन्तेष्विति प्रतिषेधोऽनर्थकः स्यात् । नह्याढ्यीकरणमिति ल्युट्ख्युनोः स्वरे रूपे समासे स्त्रियां वा विशेषोऽस्ति । अतः सामर्थ्याल्ल्युटोऽप्ययं प्रतिषेधो विज्ञायते । अभूततद्भाव इति किम् । आढ्यं कुर्वन्ति तापसा उत्पादयन्तीत्यर्थः । नात्र प्रकृतिविकारभावो विवक्ष्यते ॥

## स्पृशोऽनुदके क्विन् ॥ ९१ ॥

स्पृशेर्धातोरुदकवर्जिते कर्मणि सुपि चोपपदे कर्तरि क्विन्प्रत्ययो भवति । घृतं स्पृशति घृतस्पृक् । अनुदक इति किम् । उदकस्पर्शः । उत्तरत्रोपसर्गे चेति वचनादिहोपसर्गे न भवति । उपस्पृशति । ककारो गुणप्रतिषेधार्थः । नकारः 'क्विन' इति विशेषणार्थः । इकारो 'वेरन चे'ति सामान्यग्रहणार्थः ॥

## अञ्चेरुपसर्गे च ॥ ९२ ॥

अञ्चेर्धातोरुपसर्गे कर्मणि सुपि चोपपदे कर्तरि क्विन्प्रत्ययो भवति । प्राञ्चतीति प्राङ् । प्रत्यङ् । सम्यङ् । दध्र्यङ् । देवद्र्यङ् । विश्वद्र्यङ् । तिर्यङ् । सध्र्यङ् ॥

## युजेः केवलात् ॥ ९३ ॥

युजेर्धातोरुपपदोपसर्गवर्जितात् कर्तरि क्विन्प्रत्ययो भवति । युङ् युञ्जौ युञ्जः । केवलादिति किम् । अश्वयुक् । प्रयुक् ॥

ऋत्विग्दधृगुष्णिक्कुञ्चः ॥ ९४ ॥

ऋत्विगादयः क्विन्नन्ताः कर्तरि निपात्यन्ते । ऋतौ यजति ऋत्विक् याजकः । धृषेः क्विन् द्विर्वचनमन्तोदात्त(त्व)ञ्च निपात्यते । दधृक् प्रगल्भः । उत्पूर्वात् स्निहेः क्विन् षत्वम् उपसर्गान्तलोपश्च । उत्स्निह्यती-त्युष्णिक् छन्दः । कुञ्चः क्विन् नकारलोपाभावश्च । कुञ्चतीति कुङ् पक्षि-जातिः ॥

दिक्स्रजौ कर्मणि ॥ ९५ ॥

दिक् स्रक इत्येतौ शब्दौ क्विन्नन्तौ कर्मणि निपात्येते । दिशन्ति तामिति दिक् प्राच्यादिः । सृजन्ति तामिति स्रक माला ॥

समानान्यत्यदादिषूपमानेषु दृशः क्सकञौ च ॥ ९६ ॥

समानान्ययोश्च त्यदादिषु च सुबन्तेषूपमानेषूपपदेषु दृशेर्धातोः क-र्मणि कारके क्सकञौ प्रत्ययौ भवतः । चकारात् क्विन् । समान इव दृश्यते सदृक्षः । सदृशः । सदृक् । अन्यादृक् । अन्यादृशः । अन्यादृक्षः । त्यादृशः । त्यादृक्षः । त्यादृक् । एवं यादृक्षः यादृशः यादृगित्यादि । एते-ष्विति किम् । वृक्ष इव दृश्यते । उपमानेष्विति किम् । समानो दृश्यते । कर्मणीति किम् । स इव पश्यति । ञकारः 'कञ्करप्ख्युनामि'ति वि-शेषणार्थः ॥

भजो ण्विः ॥ ९७ ॥

भजेर्धातोः सुबन्त उपपदे कर्तरि ण्विप्रत्ययो भवति । अर्धं भजते अर्धभाक् । णकारो वृद्ध्यर्थः । इकारो 'वेरन चे'ति सामान्यग्रहणार्थः ॥

आतो विज्मनिन्क्वनिब्वनिपः ॥ ९८ ॥

आकारान्तेभ्यो धातुभ्यः सुबन्त उपपदे कर्तरि विच् मनिन् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति । विच् कीलालपाः शुभंयाः । मनिन् सुदामा अश्वत्थामा । क्वनिप् सुधीवा सुपीवा । वनिप् भूरिदावा । घृतपावा ॥

अन्येभ्योऽपि दृश्यन्ते ॥ ९९ ॥

अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन आकारान्तेभ्योऽनाकारान्तेभ्यश्च सोपसर्गेभ्यो निरुपसर्गेभ्यश्च धातुभ्यः कर्तरि यथादर्शनं विजादयो भवन्ति । विच् रेट् पाप्मरेट् । मनिन् सुशर्मा इन्द्रशर्मा । क्वनिप् प्रातरित्वा प्रातरित्वानौ । धीवा । पीवा । वनिप् विजावा अग्रेगावा । दृशिग्रहणं प्रयोगानुसरणार्थम् ॥

क्विप् च ॥ १०० ॥

आकारान्तेभ्योऽन्येभ्यश्च धातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च कर्तरि यथादर्शनं क्विप्प्रत्ययो भवति । परिव्ययति परिवीः । शकान् ह्वयति शकहूः । लुनाति लूः । खलपूः । उखायाः स्रंसते उखास्रत् । पर्णध्वत् । वहात् भ्रश्यति वहभ्रट् । कटचीकीः ॥

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजभ्य उपसर्गेऽपि ॥ १०१ ॥

सदादिभ्यो धातुभ्यो निरुपपदेभ्यः कर्मणि सुप्युपसर्गे चोपपदे कर्तरि क्विप्प्रत्ययो भवति । शुचिषत् वेदिषत् । अण्डसूः (सन ? शत)सूः प्रसूः । मित्रद्विट् । मित्रध्रुक् । (गोधुक् प्रधुक् ।) अश्वयुक् । वेदवित् प्रवित् । काष्ठभित् प्रभित् । रज्जुच्छित् प्रच्छित् । शत्रुजित् प्रजित् । सेनानीः प्रणीः गृहणीः ग्रामणीः । सम्राट् विराट् विश्वराट् राट् । सुपीत्येव सिद्धे उपसर्गेऽपीति वचनात् अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति । पूर्वस्यैवायं प्रपञ्चः ॥

अदोऽनन्ने ॥ १०२ ॥

अदेर्धातोरनन्न उपपदे कर्तरि क्विप्प्रत्ययो भवति । आममत्ति आमात् । अनन्न इति किम् । अन्नादः । बहुलवचनात् कणादः पिप्पलादः ॥

क्रव्ये वा ॥ १०३ ॥

अदेर्धातोः क्रव्ये कर्मण्युपपदे कर्तरि क्विप्प्रत्ययो वा भवति । क्रव्यमत्ति क्रव्यात् क्रव्यादः ॥

## दुहो डुघः ॥ १०४ ॥

दुहेर्धातोः कर्मण्युपपदे डुघप्रत्ययो भवति वा । कामं दुग्धे पूरयति वा कामदुघा । घर्माय दुग्धे घर्मदुघा(?) । कामधुक् घर्मधुक् । डकारः टिलोपार्थः ॥

## आवश्यकाधमर्ण्ययोर्णिनिः ॥ १०५ ॥

अवश्यमित्यस्य भाव आवश्यकम् । अधमर्णस्याधमर्ण्यम् । आवश्यकविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि धातोर्णिनिप्रत्ययो भवति । अवश्यंकारी अवश्यंहारी । 'सुप्सुपे'ति समासः । शतन्दायी । सहस्रंदायी । णकारो वृद्ध्यर्थः । इकारो हल्त्राणार्थः ॥

## सुप्यजातौ ताच्छील्ये ॥ १०६ ॥

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोः कर्तरि णिनिप्रत्ययो भवति । उष्णभोजी शीतभोजी । अजाताविति किम् । ब्राह्मणान् भोजयति । सुपीति वर्तमाने सुब्ग्रहणम् उपसर्गे मा भूत् । प्रभोक्ता उपभोक्ता ॥

## उत्प्रतिभ्यामाङि सर्तेः ॥ १०७ ॥

उत्परे प्रतिपरे चाङ्युपपदे सर्तेर्धातोस्ताच्छील्ये कर्तरि णिनिप्रत्ययो भवति । उदासारी । प्रत्यासारी । अस्मादेव ज्ञापकादन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति । तेन 'सुपि स्थापात्स्नात्राम्य' इति उपसर्ग उपपदे कप्रत्ययो न भवति ॥

## साधौ ॥ १०८ ॥

साधुशब्दे उपपदे धातोः कर्तरि णिनिप्रत्ययो भवति । साधुकारी साधुदायी । अताच्छील्यार्थ आरम्भः ॥

## ब्रह्मणि वदः ॥ १०९ ॥

ब्रह्मन्शब्द उपपदे धातोर्णिनिप्रत्ययो भवति । ब्रह्म वदति ब्रह्मवादी । अयमप्यताच्छील्यार्थ आरम्भः । जात्यर्थः असरूपोत्सर्गनिवृत्तौ च ॥

कर्तर्युपमाने ॥ ११० ॥

कर्तृवाचिन्युपमान उपपदे धातोः कर्तरि णिनिप्रत्ययो भवति । उपपदवाच्यः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षविरावी । कर्तरीति किम् । अपूपानिव भक्षयति माषान् । उपमान इति किम् । उष्ट्रः क्रोशति । अताच्छील्यार्थ आरम्भः । जात्यर्थो वा ॥

व्रताभीक्ष्ण्ययोः ॥ १११ ॥

व्रतमिति शास्त्रिको नियमः, आभीक्ष्ण्यं पौनःपुन्यं, तयोर्गम्यमानयोः सुबन्त उपपदे कर्तरि णिनिप्रत्ययो भवति । श्राद्धं न भुङ्क्ते । अश्राद्धभोजी । अलवणभोजी । स्थण्डिले शेते स्थण्डिलशायी । स्थण्डिलवर्ती । पुनःपुनः क्षीरं पिबन्ति क्षीरपायिण उशीनराः । तक्रपायिणः सौराष्ट्राः । कषायपायिणो गान्धाराः । सौवीरपायिणो बाह्लिकाः । व्रताभीक्ष्ण्ययोरिति किम् । स्थण्डिले शेते स्थण्डिलशयः । बहुलाधिकारादाभीक्ष्ण्येऽपि कुल्माषखाद इति भवति ॥

मनः ॥ ११२ ॥

मन्यतेर्धातोः सुबन्त उपपदे णिनिप्रत्ययो भवति । दर्शनीयं मन्यते दर्शनीयमानी । पटुमानी । बहुलाधिकारान्मन्यतेर्ग्रहणं, न मीनातेः उत्तरसूत्रे विकरणकृतो विशेषश्चास्ति ॥

खश्चात्ममाने ॥ ११३ ॥

आत्मनो मनने वर्तमानान्मन्यतेः सुप्युपपदे कर्तरि खश्प्रत्ययो भवति । चकाराण्णिनिश्च । य(था ? दा) प्रत्ययार्थः कर्ता आत्मानमेव दर्शनीयत्वादिना धर्मेण (युक्तं) मन्यते तदायं विधिः । दर्शनीयमात्मानं मन्यते दर्शनीयम्मन्यः दर्शनीयमानी । पण्डितम्मन्यः पण्डितमानी । आत्ममान इति किम् । दर्शनीयमानी देवदत्तस्य ॥

भूते ॥ ११४ ॥

अधिकारोऽयं 'वर्तमाने लडि'ति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामो भूते धात्वर्थ इत्येव तद्वेदितव्यम् ॥

करणे यजः ॥ ११५ ॥

णिनिरनुवर्तते । करण उपपदे भूतकालविशिष्टेऽर्थे वर्तमानाद् यजेः कर्तरि णिनिप्रत्ययो भवति । अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी । सामान्ययजेः अग्निष्टोमो विशेषयजिः करणं भवति । भूत इति किम् । अग्निष्टोमेन यजते । करण इति किम् । क्रतुमिष्टवान् ॥

कर्मणि हनः कुत्सायाम् ॥ ११६ ॥

कर्मण्युपपदे भूतेऽर्थे वर्तमानाद्धन्तेः कर्तरि णिनिप्रत्ययो भवति कुत्सायाम् । पितृव्यं हतवान् पितृव्यघाती । मातुलघाती । कुत्सायामिति किम् । चोरं हतवान् ॥

क्विब् ब्रह्मभ्रूणवृत्रेषु ॥ ११७ ॥

ब्रह्मादिषु कर्मसूपपदेषु भूतार्थाद्धन्तेः क्विप्प्रत्ययो भवति । ब्रह्महा । भ्रूणहा । वृत्रहा ॥

कृञः सुपुण्यपापकर्ममन्त्रपदेषु ॥ ११८ ॥

स्वादिषु कर्मसूपपदेषु भूतकालार्थात् करोतेः कर्तरि क्विप्प्रत्ययो भवति । शोभनं कृतवान् सुकृत् । पुण्यकृत् । पापकृत् । कर्मकृत् । मन्त्रकृत् । पदकृत् ॥

सोमे सुञः ॥ ११९ ॥

सोमे कर्मण्युपपदे भूतार्थवृत्तेः सुञः कर्तरि क्विप्प्रत्ययो भवति । सोमसुत् ॥

चेरग्नौ ॥ १२० ॥

अग्नौ कर्मण्युपपदे भूतार्थाच्चिनोतेः कर्तरि क्विब् भवति । अग्निचित् ॥

कर्मण्यग्न्याख्यायाम् ॥ १२१ ॥

चिनोतेः कर्मण्युपपदे कर्मणि कारके क्विब् भवति समुदायश्चेदग्न्याख्या भवति । श्येन इव चीयते श्येनचित् । कङ्कचित् । रथचक्रचित् । अग्न्यर्थ इष्टकाचय उच्यते ॥

अन्यत्रान्यतोऽपि चान्योऽपि च दृश्यते ॥ १२२ ॥

योऽयं भूते काले ब्रह्मादिषूपपदेषु हन्त्यादिभ्यः क्विब् विहितः, सोऽन्यस्मिन्नप्युपपदे अन्यतोऽपि वा धातोर्यथादर्शनं भवति । अन्योऽपि चैतेष्वेवोपपदेष्वेभ्य एव धातुभ्यः प्रत्ययो दृश्यते । मधुहा । जन्महा । ब्रह्मवित् । वृत्रजित् । ब्रह्मघ्नः । भ्रूणघ्नः । शास्त्रकृत् । सूत्रकृत् । भाष्यकृत् । मन्त्रवित् । पापनुत् । कर्मकारः । मन्त्रकारः । पदकारः । सुरासुत् । अनेन पूर्वस्यैव क्विब्विधानस्यायं प्रपञ्च इत्युक्तं भवति ॥

विक्रियः कुत्सायामिनिः ॥ १२३ ॥

विपूर्वात् क्रीणातेः कर्मण्युपपदे भूते काले कर्तरि कुत्सायां गम्यमानायामिनिर्भवति । सोमं विक्रीतवान् सोमविक्रयी । तैलविक्रयी । कुत्सायामिति किम् । धान्यविक्रायः ॥

दृशेः क्वनिप् ॥ १२४ ॥

दृशेर्धातोर्भूतकालार्थात् क्वनिप्प्रत्ययो भवति कर्तरि । मेरुदृश्वा । बहुदृश्वा । देवदृश्वा ॥

राज्ञि युधो हेतौ ॥ १२५ ॥

राजञ्छब्दे कर्मण्युपपदे युधेर्धातोर्भूतकालार्थात् हेतौ कर्तरि क्वनिप्प्रत्ययो भवति । राजानं योधितवान् राजयुध्वा । युधेरन्तर्भावितण्यर्थत्वात् कर्मोपपदम् । हेतौ च प्रत्यय उत्पद्यते ॥

सहे च ॥ १२६ ॥

सहशब्दे चोपपदे युधेर्भूतकालार्थात् कर्तरि क्वनिप्प्रत्ययो भवति । सह युध्यते स्म सहयुध्वा ॥

तयोः कृञः ॥ १२७ ॥

तयोः राजसहयोः कर्मसुबन्तयोरुपपदयोर्भूतकालार्थात् करोतेः कर्तरि क्वनिप्प्रत्ययो भवति । राजानं कृतवान् राजकृत्वा । सहकृत्वा । 'अन्येभ्योऽपि दृश्यत' इति क्वनिपि सिद्धे पुनर्विधानमणादिनिवृत्त्यर्थम् ॥

सप्तम्यां जनेर्डः ॥ १२८ ॥

सप्तम्यन्त उपपदे भूतकालार्थाज्जनेः कर्तरि डप्रत्ययो भवति । उपसरे जात उपसरजः । मन्दुरजः ॥

पञ्चम्यामजातौ ॥ १२९ ॥

अजातिवाचिनि पञ्चम्यन्त उपपदे भूतकालार्थात् जनेः कर्तरि डप्रत्ययो भवति । बुद्धिजः । सङ्करजः स्वेदजः ॥

जातावपि दृश्यते ॥ १३० ॥

जातिवाचिन्यपि पञ्चम्यन्त उपपदे जनेर्डप्रत्ययो दृश्यते । ब्राह्मणेभ्यो जातः ब्राह्मणजो धर्मः । क्षत्रियजं युद्धम् । दृशिग्रहणं प्रयोगानुसरणार्थम् ॥

उपसर्गे च संज्ञायाम् ॥ १३१ ॥

उपसर्गे उपपदे चकारात् सुबन्त उपपदे भूतकालार्थात् जनेः कर्तरि डप्रत्ययो भवति । प्रजाताः प्रजाः । अनुजातोऽनुजः । द्विर्जातो द्विजः । न जातोऽजः ॥

असंज्ञायां च ॥ १३२ ॥

असंज्ञायां चोपसर्गे उपपदे भूतकालार्थाज्जनेः कर्तरि डप्रत्ययो भवति । परिजाः केशाः ॥

अनोः कर्मणि ॥ १३३ ॥

अनोः पराज्जनेर्भूतकालार्थात् कर्मण्युपपदे कर्तरि डप्रत्ययो भवति । पुमांसमनुजातः (पुमनुजातः?) पुमनुजः । स्त्र्यनुजः । अनुपूर्वो जनिर्जननोपसर्जनायां प्राप्तौ वर्तमानः सकर्मको भवति ॥

ब्रह्मज्यवपुर्व्यवार्चवराहपटहपरिखाः ॥ १३४ ॥

ब्रह्मज्यादयः शब्दा डप्रत्ययान्ता निपात्यन्ते । ब्रह्मणि जीनवान् ब्रह्मज्यः । वपुर्वीतवान् वपुर्व्यः । वारि वार्वा चरति स्म वार्चो हंसः । वरमाहतवान् वराहः । पटे हन्यते स्म पटहः । परि खन्यते स्म परिखा । यल्लक्षणेनानुपपन्नं तत् सर्वं निपातनाद् भवति । उपलक्षणं चैतत् । तेन मित्रकण्ट्यादावन्यत्रापि कप्रत्ययापवादो ड एव भवति ॥

क्तवतुः ॥ १३५ ॥

भूतकालविशिष्टेऽर्थे वर्तमानाद् धातोः कर्तरि क्तवतुप्रत्ययो भवति। करोति स्म कृतवान्। उकार उगित्कार्यार्थः॥

भावकर्मणोः क्तः॥ १३६ ॥

भूतकालार्थाद् धातोः भावे कर्मणि च क्तप्रत्ययो भवति। अशितं भवता। कृतः कटो भवता॥

कर्तरि चारम्भे क्रियायाः॥ १३७ ॥

प्रारम्भे भूतत्वेन विवक्षिते वर्तमानाद् धातोः कर्तरि भावकर्मणोश्च क्तप्रत्ययो भवति। प्रकृतः कटं भवान्। प्रकृतः कटो भवता। प्रकृतं भवता॥

श्लिषशीङ्स्थासवसजनरुहजॄभजिभ्यः॥ १३८ ॥

श्लिषादिभ्यो भूतकालाभिधायिभ्यः कर्तरि भावकर्मणोश्च क्तप्रत्ययो भवति। उपश्लिष्टो गुरुं भवान्। उपश्लिष्टो गुरुर्भवता। उपश्लिष्टं भवता। अधिशयितः खट्वां भवान्। अधिशयिता खट्वा भवता। अतिशयितं भवता। उपस्थितो गुरुं भवान्। उपस्थितो गुरुर्भवता। उपस्थितं भवता। उपासितो गुरुं भवान्। उपासितो गुरुर्भवता। उपासितं भवता। अनूषितो गुरुं भवान्। अनूषितो गुरुर्भवता। अनूषितं भवता। अनुजातो माणवको माणविकाम्। अनुजाता माणविका माणवकेन। अनुजातं माणवकेन। आरूढो वृक्षं भवान्। आरूढो वृक्षो भवता। आरूढं भवता। अनुजीर्णो वृषलीं देवदत्तः। अनुजीर्णा वृषली देवदत्तेन। अनुजीर्णं देवदत्तेन। विभक्ता भ्रातरो रिक्थम्। विभक्तं रिक्थं भ्रातृभिः। विभक्तं भ्रातृभिः॥

गत्यर्थाकर्मकपिबतिभुजिभ्योऽधिकरणे च॥ १३९ ॥

भूतकालार्थवृत्तिभ्यो गत्यर्थेभ्योऽकर्मकेभ्यश्च धातुभ्यः पिबतिभुजिभ्यां कर्तरि भावकर्मणोरधिकरणे च क्तप्रत्ययो भवति। इह ते याताः। इह तैर्यातम्। इदं तेषां यातम्। इहाहिः सुप्तः। इहाहिना सुप्तम्। इदमहेः

सुप्तम् । इहासितो देवदत्तः । इहासितं देवदत्तेन । इदमेषामासितम् । अकर्मकाणां कर्म न सम्भवति । इदं पीता गावः । इदं गोभिः पीतम् । इह ते भुक्ताः । इदं तैर्भुक्तम् । इदं तेषां भुक्तम् ॥

आहारार्थेभ्योऽकर्तरि ॥ १४० ॥

आहारार्थेभ्यो भूतकालार्थवृत्तिभ्यो धातुभ्यो भावकर्मादावर्थे कर्तृवर्जिते क्तप्रत्ययो भवति । इह तैरभ्यवहृतम् । इदं तैरभ्यवहृतम् । इदं तेषामभ्यवहृतम् । इह तैरशितम् । इदं तैरशितम् । इदं तेषामशितम् । आदिकर्मणि तु कर्तर्यपि भवति । इह तेऽन्नं प्राशिताः । इह ते मधु प्रलीढाः इति ॥

सुयजिभ्यां ङ्वनिप् ॥ १४१ ॥

सुनोतेर्यजतेश्च भूतकालवृत्तेः कर्तरि ङ्वनिप् प्रत्ययो भवति । सुत्वा सुत्वानौ सुत्वानः । यज्वा यज्वानौ यज्वानः । ङकारो गुणप्रतिषेधार्थः । पकारस्तुक्स्वरार्थः । इकार उच्चारणार्थः ॥

जीर्यतेरतृन् ॥ १४२ ॥

जीर्यतेर्भूतकालार्थात् कर्तर्यतृन्प्रत्ययो भवति । जरन् जरती । नकारः स्वरार्थः । ऋकार उगित्कार्यार्थः ॥

श्रुसदवसिभ्यो लिड् वा ॥ १४३ ॥

शृणोत्यादिभ्यो भूतकालार्थवृत्तिभ्यो धातुभ्यः कर्तरि भावकर्मणोश्च लिट्प्रत्ययो वा भवति । उपशुश्राव । उपाश्रौषीत् । उपाशृणोत् । उपससाद । उपासदत् । उपासीदत् । अनूवास । अन्ववात्सीत् । अन्ववसत् । एवं भावकर्मणोः । शुश्रुवे अश्रावि अश्रूयतेत्यादि । इकारो 'लिट इरन्'ति विशेषणार्थः । टकारः 'टित आत्मनेपदानां टेरेत्' इत्येत्वार्थः ॥

लिटः कसुः ॥ १४४ ॥

लिटोऽनन्तरोक्तस्य, पुनर्वचनाद् वक्ष्यमाणस्य च, स्थाने कर्तरि कसुर्भवति वा । उपशुश्रुवान् उपशुश्राव । उपसेदिवान् उपससाद । अनूषिवान् अनूवास । जग्मिवान् जगाम । पपिवान् पपौ । पेचिवान् पपाच ॥

## ईयिवाननाश्वाननूचानः ॥ १४५ ॥

एते शब्दा भूते काले लिडन्ताः कर्तरि वा निपात्यन्ते । ईयिवान् उपेयिवान् । इणः परस्य लिटः क्वसुः, अभ्यासदीर्घसामर्थ्यादसत्येकादेशेऽनेकाच्त्वाद् अप्राप्त इडागमश्च निपात्यते । स च वलादिलक्षण एव पुनः प्रतिसूयत इति उपेयुषः समीयुषः इत्यादौ न भवति । वावचनादुपागात् उपैत् उपेयाय । अनाश्वानित्यश्नातेर्नञ्पूर्वाल्लिटः क्वसुरिडभावश्च निपात्यते । वावचनात् नाशीत् नाश्नात् नाश । अनूचान इति वचेरनुपूर्वाल्लिटः कानच् । अन्ववोचत् अन्वब्रवीत् अनूवाच ॥

## लुङ् ॥ १४६ ॥

भूतकालविशिष्टेऽर्थे वर्तमानाद् धातोर्लुङ्प्रत्ययो भवति । अकार्षीत् । अपाक्षीत् । उकारो 'लुङि सजि'ति चिह्नार्थः । ङकारो 'ङितश्चे'ति ॥

## अविवक्षितविशेषे ॥ १४७ ॥

अविवक्षितानद्यतनादिविशेषे भूतकालविशिष्टे चार्थे वर्तमानाद् धातोर्लुङ्प्रत्ययो भवति । अगमाम घोषान् । अपाम पयः । रामो वनमगात् ॥

## व्यामिश्रे च ॥ १४८ ॥

व्यामिश्रभूतकालविशिष्टे चार्थे वर्तमानाद्धातोर्लुङ्प्रत्ययो भवति । अद्य ह्यो (वा)भुक्ष्महि ॥

## वसेर्जागरणसन्ततौ रात्रिशेषे ॥ १४९ ॥

वसेर्धातोर्भूतकालविशिष्टेऽर्थे वर्तमानाल्लुङ्प्रत्ययो भवति रात्रिशेषे जागरणसन्ततौ रात्रिशेषे चेद् वाक्यप्रयोगो भवति । अनद्यतनार्थ आरम्भः । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कश्चिदाह — क्व भवानुषितः । स आह — अमुत्रावात्समिति । जागरणसन्तताविति किम् । मुहूर्तमपि सुप्त अमुत्रावसमिति भवति । रात्रिशेष इति किम् । प्रभाते मा भूत् ॥

## अनद्यतने लङ् ॥ १५० ॥

अद्यतनादन्यत्र भूतकाले धातोर्लङ्प्रत्ययो भवति । अकरोत् । अहरत् । अपचत् । अनद्यतन इति किम् । अकार्षीत् अपाक्षीत् । लकारः 'लुङ्लङ्लृङ्क्ष्वि'ति चिह्नार्थः । ङकारो 'ङितश्चे'ति ॥

परोक्षे च प्रयोक्तुर्दर्शनार्हे प्रसिद्धे ॥ १५१ ॥

प्रयोक्तुरिन्द्रियविषयमप्राप्ते तद्ग्रहणयोग्ये लोकविज्ञाते भूतानद्यतनविशिष्टेऽर्थे वर्त्तमानाद् धातोर्लङ्प्रत्ययो भवति । लिटोऽपवादः । अरुणद् यवनः साकेतम् । परोक्ष इति किम् । उदगादयमादित्यः । दर्शनार्ह इति किम् । 'जघान कंसं किल वासुदेवः' । प्रसिद्ध इति किम् । चकार कटं देवदत्तः ॥

अभिज्ञावचने लृट् ॥ १५२ ॥

अभिज्ञा स्मृतिः, तद्वाचिन्युपपदे भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोर्लृट्प्रत्ययो भवति । अभिजानासि देवदत्त! कश्मीरेषु वत्स्यामः । स्मरसि देवदत्त! कलिङ्गेषु स्थास्यामः । एवम् अध्येषि बुध्यसे चेतयस इति । ऋकारः 'स्यतासी लृलुटोरि'ति चिह्नार्थः । टकारष्टेरेत्वार्थः ॥

न हशश्वद्यत्सु ॥ १५३ ॥

अभिज्ञावचन उपपदे हशश्वद्यत्सु प्रयुज्यमानेषु भूतानद्यतने लृट् न भवति । अभिजानासि देवदत्त! इति ह कश्मीरेष्ववसाम । अध्येषि देवदत्त! इति ह कश्मीरेष्ववसाम । अध्येषि देवदत्त! शश्वत् कलिङ्गेष्वतिष्ठाम । स्मरसि देवदत्त! यन्मगधेष्ववसाम ॥

वाकाङ्क्षायाम् ॥ १५४ ॥

अभिज्ञावचन उपपदे प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोर्लृट्प्रत्ययो(न ? वा) भवति । यदिवा-यदिच-ह-शश्वत्प्रयोगे तु क्रियान्तराकाङ्क्षा न सम्भवति । स्मरसि देवदत्त! कश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे । स्मरसि देवदत्त! कश्मीरेष्ववसाम तत्रौदनमभुञ्ज्महि । अभिजानासि देवदत्त! कश्मीरेष्ववसाम यत्तत्रौदनमभुञ्ज्महि । अत्र वासो लक्षणं, भोजनं लक्ष्यम् । लक्ष्यलक्षणसम्बन्धिनी प्रयोक्तुराकाङ्क्षा भवति ॥

परोक्षे लिट् ॥ १५५ ॥

अक्षाणां परः परोक्षः । तस्मिन् भूतानद्यतनकालविशिष्टेऽर्थे वर्तमानाद् धातोर्लिट्प्रत्ययो भवति । यद्यपि च साध्यत्वेनानिष्पन्नत्वात् सर्वोऽपि धात्वर्थः परोक्षः, तथापि प्रत्यक्षसाधनत्वेन लोकस्य प्रत्यक्षाभिमानोऽस्ति । स यत्र नास्ति स परोक्षः । चकार कटं देवदत्तः । जघान कंसं वासुदेवः । बलिं बबन्ध हरिः । ददाह त्रिपुरं हरः ॥

कृतस्यास्मरणे ॥ १५६ ॥

यः कृतोऽपि व्यापारश्चित्तव्याक्षेपादिना प्रयोक्त्रा न स्मर्यते तस्मिन् भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोर्लिट्प्रत्ययो भवति । उत्तमपुरुषार्थमारम्भः । मत्तोऽहं किल विचचार । सुप्तोऽहं किल विललाप ॥

अत्यन्तापह्नवे च ॥ १५७ ॥

यः कृतोऽपि व्यापारोऽत्यन्तमपह्नूयते तस्मिन् भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोर्लिट्प्रत्ययो भवति । अपरोक्षार्थ उत्तमार्थ आरम्भः । कश्चित् केनचित् पृष्टः — क(श्चि? च्चि)त् कलिङ्गेषु त्वया हतो ब्राह्मणः । स तदपह्नुवान आह — कः कलिङ्गान् जगाम । को ब्राह्मणं ददर्श । नाहं कलिङ्गान् जगाम । कलिङ्गानपि तावन्न गतोऽहं, दूरतो ब्राह्मण(हननम्) इति तमत्यन्तमपह्नुते ॥

हशश्वतोर्लङ् च ॥ १५८ ॥

हशश्वतोः प्रयोगे भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोर्लङ्प्रत्ययो भवति । चकाराद् यथाप्राप्तश्च लिट् । इति हाकरोत् । शश्वदकरोत् । इति ह चकार । शश्वच्चकार ॥

प्रष्टव्ये चासन्नकाले ॥ १५९ ॥

भूतानद्यतनविशिष्टे प्रष्टव्य आसन्नकाले परोक्षेऽर्थे वर्तमानाद् धातोर्लङ्लिटौ प्रत्ययौ भवतः । किमगच्छद् देवदत्तः । किं जगाम देवदत्तः । प्रष्टव्य इति किम् । देवदत्तो जगाम । आसन्नकाल इति किम् । पृच्छामि भवन्तं, जघान कंसं किल वासुदेवः ॥

लट् स्मे ॥ १६० ॥

भूतानद्यतनविशिष्टे परोक्षेऽर्थे वर्तमानाद् धातोः स्मशब्द उपपदे लट्प्रत्ययो भवति। नटेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते ॥

अपरोक्षे च ॥ १६१ ॥

अपरोक्षे च भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोः स्मशब्द उपपदे लट्प्रत्ययो भवति। इति स्म ब्रह्मवादिनो वदन्ति ॥

ननौ पृष्टप्रतिवचने ॥ १६२ ॥

अनद्यतने परोक्ष इति निवृत्तम्। भूतकालविशिष्टेऽर्थे वर्तमानाद् धातोः प्रश्नपूर्वके प्रतिवचने ननुशब्द उपपदे लट्प्रत्ययो भवति। अकार्षीः कटं देवदत्त! ननु करोमि भोः। अवोचस्तत्र किञ्चित्?, ननु ब्रवीमि भोः। पृष्टप्रतिवचन इति किम्। ननु अकार्षीन्माणवकः ॥

नन्वोर्वा ॥ १६३ ॥

भूत इत्येव। तद्विशिष्टेऽर्थे वर्तमानाद् धातोर्नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने लट्प्रत्ययो वा भवति। अकार्षीः कटं देवदत्त?, न करोमि भोः। नाकार्षम्। (न ? क)स्तत्रावोचत् अहन्तु ब्रवीमि। अहं न्ववोचम् ॥

पुरि लुङ् चास्मे ॥ १६४ ॥

मण्डूकप्लुत्या अनद्यतन इति वर्तते। भूतानद्यतनविशिष्टेऽर्थे वर्तमानाद् धातोः पुराशब्दे स्मशब्दवर्जिते उपपदे लुङ् लट् च प्रत्ययो वा भवति। ताभ्यां मुक्ते पक्षे यथाविषयं लङ्लिटावपि भवतः। अवात्सुरिह पुरा छात्राः। वसन्तीह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः ॥

तदादौ च ॥ १६५ ॥

भूतानद्यतनकालविशिष्टेऽर्थे वर्तमानाद् धातोस्तदादौ चोपपदे लुङ्लटौ प्रत्ययौ वा भवतः। पक्षे यथाप्राप्तावेव लङ्लिटौ। भाषते राघवस्तदा। अभाषिष्ट राघवस्तदा। अभाषत राघवस्तदा। बभाषे राघवस्तदा।

आदिग्रहणात् 'अथाह वर्णी विदितो महेश्वरः' । 'यावद् गिरः खे मरुतां चरन्ति' ॥

वर्तमाने लट् ॥ १६६ ॥

प्रारब्धापरिसमाप्तक्रियापरिच्छिन्नो वर्तमानः कालः । तद्विशिष्टे वर्तमानाद् धातोर्लट्प्रत्ययो भवति । अस्ति भवति । ओदनं पचति । प्रासादं करोति । टकारष्टेरेत्वार्थः । अकारो 'विदो लटो वे'ति चिह्नार्थः ॥

प्रवृत्तोपरते ॥ १६७ ॥

प्रवृत्तोपरतेऽर्थे वर्तमानाद् धातोर्लट्प्रत्ययो भवति । जीवन्तं मारयति । मांसं न भक्षयति ॥

वृत्ताविरते ॥ १६८ ॥

वृत्तश्चासावविरतश्च । तस्मिन्नर्थे वर्तमानाद् धातोर्लट्प्रत्ययो भवति । इहाधीमहे । इह पुष्यमित्रं याजयामः । इह मल्ला युध्यन्ते । इह कुमार्यः क्रीडन्ति ॥

नित्यप्रवृत्ते ॥ १६९ ॥

नित्यप्रवृत्तेऽर्थे वर्तमानाद् धातोर्लट्प्रत्ययो भवति । तिष्ठन्ति पर्वताः । स्यन्दन्ते नद्यः । कथं तर्हि 'तस्थुः स्थास्यन्ति पर्वताः' इति । भूतभाविनां हैहयबलिप्रभृतीनां राज्ञां याः स्थानक्रियाः तदवच्छिन्नकालविशिष्टेऽर्थे वर्तमानाद् धातोर्भूतप्रत्यया भविष्यत्प्रत्ययाश्च भवन्ति । वर्तमानगजक्रियावच्छिन्नकालापेक्षया वर्तमानापि सिध्येत्याद्ययोगस्यैव प्रपञ्चोय (?) सूत्रद्वयम् ।

इच्छार्थेभ्यो लिङ् च ॥ १७० ॥

इच्छार्थेभ्यो वर्तमानकालविशिष्टेऽर्थे वर्तमानेभ्यो लिङ्प्रत्ययश्चकाराल्लट् च भवति । इच्छेत् । (रुष्या ? उश्या)त् । कामयेत । इच्छति । वष्टि । कामयते ॥

लटः शतृशानचावप्रथमासमानाधिकरणे ॥ १७१ ॥

लटः स्थाने शतृ शानच् इत्येतावादेशौ भवतः, अप्रथमान्तेन चेल्लडन्तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचता यज्ञदत्तेन कृतम्। पचमानं पश्य। पचमानेन कृतम्। अप्रथमासमानाधिकरण इति किम्। पचति देवदत्तः। पचते यज्ञदत्तः। शकारः सार्वधातुकसंज्ञार्थः। ऋकार उगित्कार्यार्थः। चकारः अन्तोदात्तार्थः॥

## सम्बोधने च ॥ १७२ ॥

प्रथमासमानाधिकरणार्थ आरम्भः। सम्बोधनविषये लटः शतृशानचावादेशौ भवतः। हे पचन्! हे पचमान! ॥

## लक्षणहेत्वोः क्रियायाः ॥ १७३ ॥

लक्ष्यतेऽनेनेति लक्षणं चिह्नम्। जनको हेतुः। क्रियाया लक्षणभूते हेतुभूते चार्थे वर्तमानाद् धातोः परस्य लटः प्रथमासमानाधिकरणे शतृशानचौ भवतः। जल्पन्तो ज्ञायन्ते पण्डिताः। शयाना भुञ्जते यवनाः। अर्जयन् वसति। अधीयानो वसति। लक्षणहेत्वोरिति किम्। पचति। पठति। आस्ते। अधीते। क्रियाया इति किम्। यत् तरति तल्लघु। यः कम्पते सोऽश्वत्थ इति गुणद्रव्यलक्षणे न भवतः। हन्तीति पलायते, वर्षतीति भवति, पठत्यतो लभते यजते पूज्यत इत्यादौ हेतुभावस्य इत्यादिभिर्द्योतितत्वान्न भवतः॥

## कर्तुश्च लक्षणे ॥ १७४ ॥

उपात्तक्रियस्य कर्तुर्लक्षणेऽर्थे वर्तमानाद् धातोः परस्य लटः प्रथमासमानाधिकरणे शतृशानचौ भवतः। बहुषु मूत्रयत्सु को देवदत्त इति पृष्टः कश्चिदाह — यस्तिष्ठन् मूत्रयति। एवं यो गच्छन् भक्षयति, यः शयानो भुङ्क्ते, योऽधीयान आस्ते स देवदत्त इति॥

## द्वयोः पर्यायेणाच्चयोगे ॥ १७५ ॥

द्वयोः कर्तृलक्षणयोः क्रिययोर्वर्तमानाभ्यां धातुभ्यां परस्य लटः प्रथमासमानाधिकरणे पर्यायेण शतृशानचौ भवतः न चेच्चयोगो भवति। यः पठन् पचति स चैत्रः। यः पचन् पठति स मैत्रः। यः अधीयान आस्ते स

देवदत्तः । य आसीनोऽधीते स यज्ञदत्तः । अचयोग इति किम् । यः पचति यः पठति च स मैत्रः । योऽधीते आस्ते च स देवदत्तः ॥

### तत्त्वान्वाख्याने च ॥ १७६ ॥

स्वभावस्तत्त्वं तस्यान्वाख्याने सति विनापि लक्ष्यलक्षणभावं प्रथमासमानाधिकरणे लटः शतृशानचौ भवतः ।

'फलन्ती वर्धते द्राक्षा पुष्यन्ती वर्धतेऽब्जिनी ।
शयाना वर्धते दूर्वा आसीनं वर्धते विसम् ॥'

ननु च तत्त्वान्वाख्यानमपि लक्षणं भवति । 'लक्षणहेत्वोः क्रियायाः' इत्यनेनैव सिद्धे प्रपञ्चार्थेयं सूत्रत्रयी । चयोगे परस्परं क्रिययोः लक्ष्यलक्षणभावो नास्तीति कर्तृमात्रलक्षणे शतृशानचौ न भवतः ॥

### माङ्याक्रोशे ॥ १७७ ॥

माङ्युपपदे आक्रोशे गम्यमाने प्रथमासमानाधिकरणे लटः शतृशानचावादेशौ भवतः । मा पचन्, मा पचमानः । एतस्मादेव वचनादाक्रोशे गम्यमाने माङि लुङ् लङ्लङ्भ्यां बाध्यते ॥

### अस्तिविद्यतीङ्जुहोतिवेत्तिजानातिभ्यो वा ॥ १७८ ॥

अस्त्यादिभ्यः परस्य लटः प्रथमासमानाधिकरणे शतृशानचौ वा भवतः । अस्ति ब्राह्मणः । सन् ब्राह्मणः । विद्यते ब्राह्मणः । विद्यमानो ब्राह्मणः । अधीते ब्राह्मणः । अधीयानो ब्राह्मणः । जुहोति ब्राह्मणः । जुह्वद् ब्राह्मणः । वेत्ति ब्राह्मणः । विदन् ब्राह्मणः । जानाति ब्राह्मणः । जानन् ब्राह्मणः ॥

### प्रत्यये च तिङ्प्रकृतौ ॥ १७९ ॥

प्रत्यये च तिङ्प्रकृतौ विषयभूते लटः शतृशानचावादेशौ प्रथमासमानाधिकरणे वा भवतः । पचत्तरः पचत्तमः । पचतितरां पचतितमाम् । पचद्रूपः पचतिरूपम् । जल्पत्कल्पः जल्पतिकल्पम् । पश्यद्देश्यः पश्यतिदेश्यम् । पठद्देशीयः पठतिदेशीयम् । एवं पचमानतरः पचमानतमः । पचतेतरां पचतेतमामित्यादि ॥

x

## नित्यमन्यत्रोत्तरपदे च ॥ १८० ॥

तिङ्प्रकृतेः प्रत्ययादन्यस्मिन् प्रत्यये उत्तरपदे च विषयभूते समानाधिकरणे लटः शतृशानचौ नित्यं भवतः। कुर्वद् भक्तिरस्य कौर्वतः। पाचतः। कुर्वत्कः पचत्कः। कुर्वत्पाशः पचत्पाशः। कुर्वच्चरः पचच्चरः। एवं कौर्वाणः। उपकुर्वाणक इति। उत्तरपदे — कुर्वद्भक्तिः। कुर्वाणभक्तिः। कुर्वत्प्रियः। कुर्वाणप्रियः। ब्रुवन्माठरः ब्रुवाणमाठरः ॥

## वेत्तेः श्वसुश्च ॥ १८१ ॥

वेत्तेः परस्य लटः श्वसुरादेशो भवति, चकारात् शतृशानचौ च। विद्वान् विदन् संविदानः। वेत्ति विदुषा कृतम्। हे विद्वन्!। विद्वानास्ते। विद्वान् लभते। विद्वान् करोति। शकारः सार्वधातुकार्थः। उकार उगित्कार्यार्थः ॥

## इङ्धारिभ्यां शतृ शक्तौ ॥ १८२ ॥

इङ्धारिभ्यां परस्य लटः स्थाने शक्तौ गम्यमानायां कर्तरि शत्रादेशो भवति। अधीयन् पारायणम्। धारयन्नुपनिषदम्। शक्ताविति किम्। अधीते पारायणं, धारयत्युपनिषदं नच शक्नोति ॥

## द्विषः शत्रौ ॥ १८३ ॥

द्विषेर्धातोः परस्य लटः शत्रौ कर्तरि शत्रादेशो भवति। चोरस्य द्विषन्। चोरं द्विषन्। शत्राविति किम्। द्वेष्टि पतिं भार्या ॥

## सुञो यजमाने ॥ १८४ ॥

सुनोतेर्धातोः परस्य लटो यजमाने कर्तरि शत्रादेशो भवति। सुन्वन्। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्रिण उच्यन्ते। यजमान इति किम्। सुन्वन्ति ऋत्विजः ॥

## अर्हः प्रशंसायाम् ॥ १८५ ॥

अर्हतेर्धातोः परस्य लटः प्रशंसायां गम्यमानायां कर्तरि शत्रादेशो भवति। अर्हन् प्रशस्तः। प्रशंसायामिति किम्। अर्हति चोरो वधम् ॥

पूङ्यजिभ्यां शानन् ॥ १८६ ॥

पूङ्यजिभ्यां धातुभ्यां परस्य लटः शानन्नित्ययमादेशो भवति । पवमानः । यजमानः । शकारः सार्वधातुकार्थः । नकारः स्वरार्थः ॥

शक्तिवयस्ताच्छील्येषु शानच् ॥ १८७ ॥

शक्तौ वयसि ताच्छील्ये च गम्यमाने कर्तरि शानजादेशो भवति । कतीह कण्डून्निघ्नानाः । कतीह कवचमुद्वहमानाः । (कतीह मुण्डयमानाः ।) पुनर्विधानात् परस्मैपदिभ्योऽपि भवति ॥

तच्छीलतद्धर्मतत्साधुकारिष्वा क्वेः ॥ १८८ ॥

भ्राजादिभ्यः क्विपं वक्ष्यति । तद्यावद् यान् प्रत्ययानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु ते भवन्तीत्यधिकृतं वेदितव्यम् । अभिविधावाङ् । क्विपोऽपि ह्ययमर्थनिर्देशः । तदित्यनेन धात्वर्थः शीलादिविशेषणत्वेन परामृश्यते । तत् शीलं यस्य स तच्छीलः कर्त्ता । स धर्म आचारो यस्य स तद्धर्मा । तत् साधु करोति स तत्साधुकारी ॥

तृन् ॥ १८९ ॥

वर्तमानार्थाद् धातोस्तच्छीलादिषु कर्तृषु तृन्प्रत्ययो भवति । तच्छीलः — कर्ता कटान् । वदिता जनापवादान् । तद्धर्मा — मुण्डयितारः श्राविष्ठायना वधूमूढाम् । अपहर्त्तार आह्वरकाः श्राद्धे सिद्धमन्नम् । तत्साधुकारी — कर्ता कटम् । गन्ता खे(लं ? टम्) । नकारः स्वरार्थः ॥

अलङ्कृञ्निराकृञ्भ्यामिष्णुच् ॥ १९० ॥

अलम्पूर्वान्निराङ्पूर्वाच्च कृञः वर्तमानार्थात् तच्छीलादौ कर्तरि इष्णुच्प्रत्ययो भवति । अलङ्करिष्णुः । अरीन् निराकरिष्णुः । चकारः स्वरार्थः ॥

उदि पचिपतिमदिभ्यः ॥ १९१ ॥

प(दा ? चा)दिभ्यो वर्तमानार्थेभ्य उद्युपपदे तच्छीलादौ कर्तरि इष्णुच्प्रत्ययो भवति । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः ॥

प्रापयोर्जनित्रपिभ्याम् ॥ १९२ ॥

जनि त्रपि इत्येताभ्यां वर्तमानार्थाभ्यां यथासङ्ख्यं प्रापयोरुपपदयो-स्तच्छीलादौ कर्तरि इष्णुच्प्रत्ययो भवति । प्रजनिष्णुः । अपत्रपिष्णुः ॥

वृतिवृधिसहिचरिरुचिभ्राजिभ्यः ॥ १९३ ॥

वृत्यादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि इष्णुच्प्रत्ययो भवति । वर्त्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः । रोचिष्णुः । भ्राजिष्णुः ॥

भुवः ॥ १९४ ॥

भवतेर्धातोर्वर्तमानार्थात् तच्छीलादौ कर्तरीष्णुच्प्रत्ययो भवति । प्रभविष्णुः ॥

जेश्च क्स्नुः ॥ १९५ ॥

जयतेर्भवतेश्च तच्छीलादौ कर्तरि क्स्नुप्रत्ययो भवति । जिष्णुः । भूष्णुः । ककारः कित्कार्यार्थः ॥

ग्लाम्लास्थाक्षिपचिपरिमृजिभ्यः स्नुः ॥ १९६ ॥

ग्लादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि स्नुप्रत्ययो भवति । ग्लास्नुः । म्लास्नुः । स्थास्नुः । क्षेष्णुः । पक्ष्णुः । परिमार्क्ष्णुः ॥

त्रसिगृधिधृषिक्षिपिभ्यः क्नुः ॥ १९७ ॥

त्रस्यादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि क्नुप्रत्ययो भवति । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । ककारो गुणप्रतिषेधार्थः ॥

अष्टाभ्यः शमादिभ्यो घिनुण् ॥ १९८ ॥

'शमु उपशमने' इति दिवादौ पठ्यते । तदादिभ्यो वर्तमानार्थेभ्योऽष्टाभ्यो धातुभ्यस्तच्छीलादौ कर्तरि घिनुण्प्रत्ययो भवति । शमी । तमी । दमी । क्षमी । श्रमी । क्लमी । भ्रमी । उन्मादी । अष्टाभ्य इति किम् । असिता । णकारो वृद्ध्यर्थः । घकार उत्तरत्र कुत्वार्थः । उकार उच्चारणार्थः ॥

युजभुजभजद्विषद्रुहदुहदुषत्यजरञ्जिभ्यः ॥ १९९ ॥

युजादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि घिनुण्प्रत्ययो भवति । युज्यते युनक्तीति वा तच्छीलादि योगी । भुङ्क्ते भुनक्ति भुजति वा भोगी । (भागी ।) द्वेषी । द्रोही । दोही । दोषी । त्यागी । रागी । 'रञ्जेर्घिनुन्घिनुण्सुत्रनिषु चे'ति नलोपः ॥

क्रीडिमुषिभ्यामाङि ॥ २०० ॥

क्रीडिमुषिभ्यां वर्तमानार्थाभ्याम् आङ्युपपदे घिनुण्प्रत्ययो भवति । आक्रीडी । आमोषी ॥

यसियमिभ्यां प्रे च ॥ २०१ ॥

यसियमिभ्यां वर्तमानार्थाभ्यां प्रे चाङि चोपपदे घिनुण्प्रत्ययो भवति । प्रयासी आयासी । प्रयामी आयामी ॥

माथिलपिभ्यां च ॥ २०२ ॥

मथिलपिभ्यां वर्तमानार्थाभ्यां प्रे उपपदे घिनुण्प्रत्ययो भवति । प्रमाथी । प्रलापी ॥

समि ज्वरिपृणक्तिभ्याम् ॥ २०३ ॥

सम्युपपदे ज्वरिपृणक्तिभ्यां घिनुण्प्रत्ययो भवति । सञ्ज्वारी । सम्पर्की । पृचेर्विकरणनिर्देशादादादिकस्य सम्पर्चितेति भवति ॥

वौ विचकत्थस्रन्भुकषकसलसहनिभ्यः ॥ २०४ ॥

विचादिभ्यो वावुपपदे घिनुण्प्रत्ययो भवति । विवेकी । विकत्थी । विस्रम्भी । विकाषी । विकासी । विलासी । विघाती ॥

अपे च लषः ॥ २०५ ॥

लषेर्वर्तमानार्थादपे वौ चोपपदे घिनुण्प्रत्ययो भवति । अपलाषी विलाषी ॥

अभावाहनश्च ॥ २०६ ॥

आङ्पूर्वाद्धन्तेर्लषेश्च वर्तमानार्थात् अभावुपपदे घिनुण्प्रत्ययो भवति । अभ्याघाती । अभिलाषी ॥

संव्यनुप्रेषु वदः ॥ २०७ ॥

समादिषूपपदेषु वदेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । संवादी विवादी । अनुवादी । प्रवादी ॥

समत्यपाभिव्यभिषु चरः ॥ २०८ ॥

समादिषु उपपदेषु चरतेर्वर्तमानार्थात् घिनुण्प्रत्ययो भवति । सञ्चारी । अतिचारी । अपचारी । अभिचारी । व्यभिचारी ॥

समनुव्यवेषु रुधः ॥ २०९ ॥

समादिषूपपदेषु रुधेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । संरोधी । अनुरोधी । विरोधी । अवरोधी ॥

विपरिप्रेषु सर्त्तेः ॥ २१० ॥

व्यादिषूपपदेषु सर्त्तेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । विसारी । परिसारी । प्रसारी ॥

संव्योः सृजः ॥ २११ ॥

संव्योरुपपदयोः सृजतेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । संसर्गी । विसर्गी ॥

संप्रयोर्वसः ॥ २१२ ॥

सम्प्रयोरुपपदयोर्वसतेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति संवासी । प्रवासी । वसतेर्ग्रहणं, न वस्तेः ॥

प्रव्योर्द्रुवः ॥ २१३ ॥

प्रव्योरुपपदयोर्द्रुवो वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । प्रद्रावी । विद्रावी ॥

परिव्योर्दहः ॥ २१४ ॥

परिव्योरुपपदयोर्दहेर्वर्तमानार्थाद् घिनुण्प्रत्ययो भवति । परिदाही । विदाही ॥

परौ देवृमुहिभ्याम् ॥ २१५ ॥

देवृमुहिभ्यां परावुपपदे घिनुण्प्रत्ययो भवति। परिदेवी। परिमोही ॥

क्षिपरटवदवादिदेविभ्यो ण्वुल् च ॥ २१६ ॥

क्षिपादिभ्यो वर्तमानार्थेभ्यः परावुपपदे तच्छीलादौ कर्तरि ण्वुल्प्रत्ययो भवति चकाराद् घिनुण् च। परिक्षेपकः परिक्षेपी। परिराटकः परिराटी। परिवदति परिवादयति इति वा परिवादकः परिवादी। परिदेवकः परिदेवी। वासरूपविधिना ण्वुलि सिद्धे पुनर्ण्वुल्विधानात् तच्छीलादिषु ण्वुल्तृजादयो न भवन्ति ॥

निन्दहिंसक्लिशखादविनाशिव्याभाषासू(र्य ? य्य)-नेकाज्भ्यो वुञ् ॥ २१७ ॥

निन्दादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि वुञ्प्रत्ययो भवति। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। व्याभाषकः। असूयकः। दरिद्रायकः। चकासकः। चुलुम्पकः। अनेकाच्त्वादेव सिद्धे असूयिग्रहणं कण्डूयादिनिवृत्त्यर्थम्। कण्डूयिता। प्रत्ययान्तरकरणमनेकाक्षु स्वरभेदार्थम्। निन्दादिष्वेकाक्षु ज्ञापकार्थं ताच्छीलिकेषु वासरूपविधिर्नास्तीति। तेन निन्दिता हिंसितेत्यादौ तृन् न भवति। ज्ञापकज्ञापितस्य तु विधेरनित्यत्वात् क्वचित् भवति।

"कामक्रोधौ मनुष्याणां खादितारौ वृकाविव।"

इति ॥

देविक्रुशोश्चोपसर्गे ॥ २१८ ॥

देवयतेः क्रुशेश्च वर्तमानार्थाद् उपसर्ग उपपदे तच्छीलादौ कर्तरि वुञ्प्रत्ययो भवति। आदेवकः। परिदेवकः। आक्रोशकः। उपसर्ग इति किम्। देवयिता। क्रोष्टा ॥

चलनशब्दार्थादकर्मकाद् युच् ॥ २१९ ॥

चलनार्थात् शब्दार्थाच्चाकर्मकाद् धातोर्वर्तमानार्थवृत्तेस्तच्छीलादौ कर्तरि युच्प्रत्ययो भवति। चलनः। चोपनः। शब्दनः। रवणः। अकर्मकादिति किम्। पठिता विद्याम्। चकारः स्वरार्थः ॥

अङितो हलादेरात्मनेपदिनः ॥ २२० ॥

अङकारानुबन्धाद्धलादेरात्मनेपदिनो वर्तमानार्थाद् धातोस्तच्छीलादौ कर्तरि युच्प्रत्ययो भवति। शोभनः। स्पर्धनः। जुगुप्सनः। मीमांसनः। बहुलवचनादपवादविषयेऽपि भवति। वर्तनः। भासनः। विकत्थनः। अङित इति किम्। शयिता। ह्वयिता। हलादेरिति किम्। एधिता। ईक्षिता। आत्मनेपदिन इति किम्। भविता। अकर्मकादित्येव। वसिता वस्त्रम्। सेविता विषयान् ॥

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदिभ्यः ॥ २२१ ॥

जुप्रभृतिभ्यो वर्तमानार्थवृत्तिभ्यस्तच्छीलादौ कर्तरि युच्प्रत्ययो भवति। जु इति सौत्रो धातुर्वेगितायां गतौ वर्तते। जवनः। कुटिलं क्रामतीत्येवंशीलः चङ्क्रमणः। दन्द्रमणः। सरणः। गर्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः। गत्यर्थानां ग्रहणम् अचलनार्थत्वात्। अन्यद्धि गमनम् अन्यच्चलनम्। तेन गन्ता खेलन इत्यादावकर्मकत्वेऽपि युच् न भवति। पदिग्रहणमुकञा बाधितस्य पुनर्विधानार्थम् ॥

क्रुधमूषार्थेभ्यश्च ॥ २२२ ॥

क्रुधार्थेभ्यो भूषार्थेभ्यश्च वर्तमानार्थवृत्तिभ्यस्तच्छीलादौ कर्तरि युच्प्रत्ययो भवति। क्रोधनः। कोपनः। रोधनः; मण्डनः। भूषणः। प्रसाधनः ॥

न यान्तसूददीपदीक्षिभ्यः ॥ २२३ ॥

यान्तेभ्यः सूदादिभ्यश्च युच्प्रत्ययो न भवति। क्नूयिता। क्ष्मायिता। (दे ? द)यिता। सूदिता। दीपिता। दीक्षिता। कथं मधुसूदनः अरिसूदनः। ण्यन्तात् कर्तरि ल्युः, नन्द्यादिषु वा द्रक्ष्यते ॥

लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥ २२४ ॥

लषादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि उकञ्प्रत्ययो भवति। अपलाषुकः। प्रपातुकः। उपपादुकः। उपस्थायुकः। प्रभावुकः।

प्रवर्षुकः । आघातुकः । कामुकः । आगामुकः । प्रशारुकः । उकारो वृद्ध्याद्यर्थः ॥

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ २२५ ॥

जल्पादिभ्यो वर्तमानार्थवृत्तिभ्यस्तच्छीलादौ कर्तरि षाकन्प्रत्ययो भवति । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी । षकारो ङीषर्थः । नकारः स्वरार्थः ॥

प्रे जूसूभ्यामिनिः ॥ २२६ ॥

प्रे उपपदे जूसूभ्यां तच्छीलादौ कर्तरि इनिप्रत्ययो भवति । प्रजवी । प्रसवी । सु इति निरनुबन्धकग्रहणात् सूतेः सूयतेश्च न भवति । इकारो नकारपरित्राणार्थः ॥

जीणद्दक्षिश्रिपरिभूवमाभ्यमाव्यथिभ्यः ॥ २२७ ॥

जिप्रभृतिभ्यो वर्तमानार्थवृत्तिभ्यस्तच्छीलादौ कर्तरि इनिप्रत्ययो भवति । जयी । अत्ययी । आदरी । क्षयी । विश्रयी । परिभवी । वमी । अभ्यमी । अव्यथी ॥

(दै ? दयि)पति (ग्र ? गृ)हिस्पृहिनिद्रातन्द्राशीङ्-श्रद्धाभ्य आलुच् ॥ २२८ ॥

(दै ? दयि) प्रभृतिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तर्यालुच्प्रत्ययो भवति । दयालुः । पति(ग्र ? गृ)ही सौत्राविकारान्तौ । पतयालुः । गृहयालुः । स्पृहिरदन्तो ण्यन्तः । स्पृहयालुः । निद्रातीति निद्रालुः । तन्द्रातीति तन्द्रालुः । निपातनान्नत्वम् । शयालुः । श्रद्धत्ते एवंशीलः श्रद्धालुः । चकारोऽन्तोदात्तार्थः ॥

दाधेट्सिशदसदो रुः ॥ २२९ ॥

दादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि रुप्रत्ययो भवति । ददातीति दारुः । धयतीति धारुः । सिनोतीति सेरुः । शीयते शद्रुः । सीदतीति सद्रुः ॥

सृघस्यदः क्मरच् ॥ २३० ॥

स्रादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि क्मरच्प्रत्ययो भवति । सृमरः । घस्मरः । अद्मरः । (घ? क)कारो गुणप्रतिषेधार्थः । चकारः अन्तोदात्तार्थः ॥

भासिमिदिभ्यां घुरच् ॥ २३१ ॥

आभ्यां तच्छीलादौ कर्तरि घुरच्प्रत्ययो भवति । भासुरम् । मेदुरम् । घकार उत्तरत्र कुत्वार्थः । चकारः अन्तोदात्तार्थः ॥

भञ्जेः कर्मकर्तरि ॥ २३२ ॥

भञ्जेर्वर्तमानार्थात् तच्छीले कर्मकर्तरि घुरच्प्रत्ययो भवति । भज्यते स्वयमेवेत्येवंशीलं भङ्गुरं काष्ठम् । कर्मकर्तरीति किम् । भङ्क्ता तनुम् ॥

छिदिभिदिभ्यां कुरच् ॥ २३३ ॥

आभ्यां कर्मकर्तरि तच्छीलादौ कुरच्प्रत्ययो भवति । छिद्यते स्वयमेव छिदुरा रज्जुः । भिद्यते स्वयमेव भिदुरः कुसूलः । केचित् कर्मकर्तरीति नानुवर्तयन्ति । तेषां 'दोषान्धकारभिदुरः', 'दसारिवक्षश्छिदुर' इति ॥

विदेश्च ॥ २३४ ॥

वेत्तेश्च तच्छीलादौ कर्तरि कुरच्प्रत्ययो भवति । वेत्तीति विदुरः । अभिधानशक्तिस्वाभाव्याद् विद्यतेर्वि(न्दे? न्दते)श्च न भवति । नहि सत्तालाभयोस्तच्छीलादिरर्थः सम्भवति ॥

इण्नजिसृनाशिभ्यः क्वरप् ॥ २३५ ॥

इणादिभ्यस्तच्छीलादौ कर्तरि क्वरप्प्रत्ययो भवति । इत्वरः । जित्वरः । सृत्वरः । नश्वरः । इत्वरी । ककारो गुणवृद्धिप्रतिषेधार्थः । पकारस्तुक्स्वरार्थः ॥

गमेस्त च ॥ २३६ ॥

गमेः क्वरप् तकारश्चान्तादेशो भवति । गत्वरः ॥

जागुरूकः ॥ २३७ ॥

जागर्तेस्तच्छीलादौ कर्तरि ऊकप्रत्ययो भवति । जागरूकः । बहुलाधिकारात् जागरिता परराष्ट्रात् ॥

यजिजपिदंशिवादिभ्यो यङः ॥ २३८ ॥

यजादिभ्यो यङन्तेभ्यस्तच्छीलादौ कर्तर्यूकप्रत्ययो भवति । यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकः ॥

सहिचलिवहिभ्यः किकिनौ ॥ २३९ ॥

सहादिभ्यो यङन्तेभ्यस्तच्छीलादौ कर्तरि किकिनौ प्रत्ययौ भवतः । सासहिः । चाचलिः । वावहिः । किकिनोः स्वरे विशेषः । ककारश्छन्दसि कित्कार्यार्थः । दादिर्गाः पपिः सोममिति ॥

पापतिः ॥ २४० ॥

पातेर्यङन्तात् किकिनौ नीगभावश्च निपात्यते । पापतिः ॥

चक्रिसस्रिजज्ञिदधिनेमयः ॥ २४१ ॥

चक्र्यादयः शब्दाः किकिनन्ता निपात्यन्ते । करोत्येवंशीलः चक्रिः । सरतीति सस्रिः । जायते जानाति वा जज्ञिः । दधातीति दधिः । नमतीति नेमिः ॥

दीपिकम्प्यजासिहिंसिकामिस्मिनामिभ्यो रः ॥ २४२ ॥

दीपादिभ्यस्तच्छीलादौ कर्तरि रप्रत्ययो भवति । दीप्यते दीप्रः । कम्पते कम्प्रः । न जस्यत्यजस्रम् । हिनस्तीति हिंस्रः । बहुलाधिकारात् कम्रः कर्मण्यपि । स्मेरः । नम्रः । बहुलाधिकारात् कमितेत्यपि भवति ॥

सनाशंसिभिक्षिभ्य उः ॥ २४३ ॥

सन्नन्तेभ्यो धातुभ्य आशंसेर्भिक्षेश्च तच्छीलादौ कर्तरि उप्रत्ययो भवति । चिकीर्षुः । जिहीर्षुः । आशंसुः । भिक्षुः ॥

वेत्तीच्छत्योर्नुछौ च ॥ २४४ ॥

वेत्तेश्चेच्छतेश्च तच्छीलादौ कर्तरि उप्रत्ययस्तत्सन्नियोगेन च यथा-सङ्ख्यं नुमागमः छकारश्चान्तादेशो भवति । वेत्तीत्येवंशीलो विन्दुः । इच्छतीतीच्छुः । कथम् 'अपां विन्दुरि'ति । विन्देरवयवार्थादौणादिक उः ॥

स्वपितृषिधृषिभ्यो नजिङ् ॥ २४५ ॥

स्वप्यादिभ्यस्तच्छीलादौ कर्तरि नजिङ्प्रत्ययो भवति । स्वप्नक् । तृष्णक् । धृष्णक् । ङकारो गुणप्रतिषेधार्थः । नकारः स्वरार्थः ॥

शॄवन्दिभ्यामारुः ॥ २४६ ॥

शॄ वन्दीत्येताभ्यां तच्छीलादौ कर्तरि आरुप्रत्ययो भवति । शृणाति शरारुः । विशीर्यते विशरारुः । वन्दते वन्दारुः ॥

भियः क्रुक्लुकन्क्लुकनः ॥ २४७ ॥

भियो वर्तमानार्थात् तच्छीलादौ कर्तरि क्रु क्रुकन् क्लुकन् इत्येते प्रत्यया भवन्ति । भीरुः । भीरुकः । भीलुकः । ककारो गुणप्रतिषेधार्थः । नकारः स्वरार्थः ॥

स्थेशभासपिसकसो वरच् ॥ २४८ ॥

स्थादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि वरच्प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ॥

यातेर्यङः ॥ २४९ ॥

यातेर्यङन्तात् तच्छीलादौ कर्तरि वरच्प्रत्ययो भवति । यायावरः ॥

भ्राजभासपॄधुर्विद्युतोर्जिग्रावस्तुवः क्विप् ॥ २५० ॥

भ्राजादिभ्यो वर्तमानार्थेभ्यस्तच्छीलादौ कर्तरि क्विप्प्रत्ययो भवति । विभ्राजते एवंशीलो विभ्राट् । भासते भाः । पिपर्तीति पूः । धूर्वतीति धूः । विद्योतते विद्युत् । ऊर्जयतीत्यूर्क् । ग्रावाणं स्तौति ग्रावस्तुत् । अथ 'क्विप् चे'ति सामान्येनैव सिद्धे किमर्थं पुनः क्विप् विधीयते । ताच्छीलिकैर्न बाध्यते, वासरूपविधिश्चात्र नास्तीत्युक्तमिति ॥

अन्येभ्योऽपि दृश्यते ॥ २५१ ॥

अन्येभ्योऽपि धातुभ्यस्तच्छीलादौ कर्तरि क्विप् दृश्यते। पचतीति पक्। शक्नोतीति शक्। भिनत्तीति भित् ॥

श्रिस्रुद्रुश्रुज्वायतस्तुकटप्रुपरिव्रजां दीर्घश्च ॥ २५२ ॥

श्र्यादिभ्यस्तच्छीलादौ कर्तरि क्विप्प्रत्ययस्त(त्स)न्नियोगेन चैषां दीर्घो भवति। श्रयतीति श्रीः। शरद्रूः। श्रूः। जूः। आयतस्तूः। कटप्रूः। परिव्राट् परिव्राजौ परिव्राजः ॥

वचिप्रच्छ्योरप्रसारणं च ॥ २५३ ॥

वचि प्रच्छि इत्येताभ्यां तच्छीलादौ कर्तरि क्विप्प्रत्ययो भवति। दीर्घत्वमप्रसारणं च भवति। वक्तीति वाक्। पृच्छतीति प्राट् ॥

ध्यैः संप्रसारणं च ॥ २५४ ॥

ध्यायतस्तच्छीलादौ कर्तरि क्विप् सम्प्रसारणं च भवति। ध्यायतीति धीः ॥

जुहोतेर्द्वे च ॥ २५५ ॥

जुहोतेस्तच्छीलादौ कर्तरि क्विप् दीर्घत्वं द्विर्वचनं चास्य भवति। जुहूः ॥

द्युतिगमोश्च ॥ २५६ ॥

द्युतिगमोश्च तच्छीलादौ कर्तरि क्विप् द्विर्वचनं च भवति। द्योतत इति विद्युत्। गच्छतीति जगत् ॥

दृणातेर्ह्रस्वश्च ॥ २५७ ॥

दृ इत्येतस्मात् तच्छीलादौ कर्तरि क्विप् द्विर्वचनं ह्रस्वश्च भवति। दद्रुत् ॥

भुवः संज्ञायाम् ॥ २५८ ॥

भुवस्तच्छीलादौ कर्तरि संज्ञायां गम्यमानायां क्विप्प्रत्ययो भवति। भूः पृथ्वी। शम्भूः शिवः। मयोभूः स एव। आत्मभूः कामः। मनोभूः

१. 'ध्यः प्र' क. पाठः.

स एव । स्वयंभूर्ब्रह्मा । सम्भूः स एव । मित्रभूर्नाम कश्चित् । प्रतिभूरुत्तमर्णाधमर्णयोरन्तरस्थः । दृग्भूर्व्यवसायाम् (?) । कारभूः पण्यमूल्यादिः । वर्षाभूर्दर्दुर ओषधिश्च । पुनर्भूः पुनरूढा ओषधिश्च । तच्छीलादीनां पूर्णोऽवधिः ॥

डुः शंविसम्प्रेषु ॥ २५९ ॥

शमादिषूपपदेषु भवतेः संज्ञायां डुप्रत्ययो भवति । शम्भुः शङ्करः । विभुर्व्यापकः । सम्भुर्जनिता । प्रभुः स्वामी । बहुलाधिकारात् विभ्वादयोऽसंज्ञायामपि भवन्ति ॥

धः कर्मणि ष्ट्रन् ॥ २६० ॥

धयतेर्दधातेर्वा कर्मणि कारके संज्ञायां ष्ट्रन्प्रत्ययो भवति । धयन्ति तां दधति वा भैषज्यार्थमिति धात्री स्तनदायिनी आमळकी चोच्यते । षकारो ङीषर्थः । नकारः स्वरार्थः ॥

नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतपानहिभ्यः करणे ॥ २६१ ॥

नयत्यादिभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवति । नयत्यनेनेति नेत्रम् । दात्रं । शस्त्रं । योत्रं । योक्त्रं । स्तोत्रं । तोत्रं । सेत्रं । सेक्त्रं । मेढ्रं । पत्रं । (पात्रं) । नद्ध्रः । नद्ध्री ॥

दंशेरषित् ॥ २६२ ॥

दंशेः करणे कारके ष्ट्रन्प्रत्ययोऽषिद् भवति । षित्वप्रतिषेधात् ङीषभावः । दंष्ट्रा ॥

सीरसूकरास्ये पुवः ॥ २६३ ॥

सीरास्ये सूकरास्ये च करणे पुनातेः पवतेर्वा ष्ट्रन्प्रत्ययो भवति । पोत्रं हलस्य सूकरस्य वा मुखमुच्यते ॥

अर्त्तिलूधूसूखनिसहिवहिचरिभ्य इत्रः ॥ २६४ ॥

अर्त्यादिभ्यः करणे कारके इत्रप्रत्ययो भवति । अरित्रं । लवित्रं । 'धू विधूनने' धवित्रं । 'षू प्रेरणे' सवित्रं । खनित्रं । सहित्रं । वहित्रं । चरित्रम् ॥

पुवः संज्ञायाम् ॥ २६५ ॥

पुनातेः पवतेश्च करणे कारके संज्ञायामित्रप्रत्ययो भवति । पवित्रं बर्हिः । पवित्रा नाम नदी ॥

कर्तरि चर्षिदेवतयोः ॥ २६६ ॥

पुवो धातोः करणे कर्तरि च कारके ऋषिदेवतयोरित्रप्रत्ययो भवति । पूयतेऽनेनेति पुनाति वासमिति पवित्रोऽयमृषिर्मन्त्रः पवित्रोऽग्निः स मा पुनातु ॥

ञीतः क्तः प्राग्वत् ॥ २६७ ॥

ञ्यनुबन्धाद् धातोर्वर्तमानार्थात् क्तप्रत्ययो भवति । प्राग्वत् कर्तृकर्मादावर्थे । ञिमिदा मिन्नः । ञिक्ष्विदा क्ष्विण्णः ॥

मतिबुद्धिपूजार्थेभ्यः ॥ २६८ ॥

मतिरिच्छा । बुद्धिर्ज्ञानम् । पूजा अर्चा । मतिबुद्धिपूजार्थेभ्यो धातुभ्यो वर्तमानार्थेभ्यः प्राग्वच्च कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । राज्ञां मतः । राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । राज्ञां पूजितः । राज्ञामर्चितः ॥

शीङ्श्लिषिसञ्ज्यञ्जिलङ्गिलिपितृपिदृपिक्रुधिक्षुधिरुहिमुहिदिहिस्निहिक्लमिश्रम्यवत्रासिसुधाञ्भृपॄमदिमुदिप्रभृतिभ्यः ॥ २६९ ॥

शीङादिभ्यो वर्तमानार्थेभ्यः प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । शयितः । श्लिष्टः । सक्तः । अक्तः । लग्नः । लिप्तः । तृप्तः । (दृप्तः ।) क्रुद्धः । क्षुधितः । आरूढः । मूढः । दिग्धः । स्निग्धः । क्लान्तः । श्रान्तः । अवतीर्णः । आसितः । सुहितः । भृतः । पूर्णः । मत्तः । मुदितः । प्रभृतिग्रहणाद् व्रीलितः विस्मित इत्यादयोऽपि भवन्ति ॥

शीलिरक्षिक्षमिकमिजुषिरुषितुषिहृषिभ्यः ॥ २७० ॥

शील्यादिभ्यो वर्तमानार्थेभ्यः प्राग्वत् कर्तृकर्मादौ क्तप्रत्ययो भवति । शीलितः । रक्षितः । क्षान्तः । कान्तः । जुष्टः । रुष्टः । तुष्टः । हृष्टः ॥

कुशियसिभ्यामाङि ॥ २७१ ॥

कुशियसिभ्यां वर्तमानार्थवृत्तिभ्याम् आङ्युपपदे प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । आकुष्टः । आयस्तः ॥

रभेः समि च ॥ २७२ ॥

रभेर्वर्तमानार्थात् सम्याङि चोपपदे प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । संरब्धः । आरब्धः ॥

यमेरुदि च ॥ २७३ ॥

यमेर्वर्तमानार्थादुदि समि चोपपदे प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । उद्यतः । संयतः ॥

अभिव्याङि हृञः ॥ २७४ ॥

हृञो वर्तमानार्थादभिव्याङ्युपसर्गसमुदाय उपपदे प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । अभिव्याहृतः ॥

नञि मृङः ॥ २७५ ॥

नञ्युपपदे वर्तमानार्थान्मृङः प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । अमृतः ॥

कषेरनिटो भविष्यति च ॥ २७६ ॥

कषेः कृच्छ्रगहनयोरनिट्त्वं वक्ष्यति । ततो भविष्यति वर्तमाने चार्थे वर्तमानात् प्राग्वत् कर्तृकर्मादावर्थे क्तप्रत्ययो भवति । कषिष्यति कषति वा कष्टम् । कष्टा दिशस्तमसा । अनिट इति किम् । कषिताः शत्रवः शूरेण ॥

सर्वेभ्यो हेतुसम्पत्तौ वा ॥ २७७ ॥

सर्वेभ्यो भविष्यदर्थवृत्तिभ्यो धात्वर्थोत्पत्तिकारणनिष्पत्तौ सत्यां क्तप्रत्ययो भवति । किं ब्रवीषि । वृष्टो देवः, सम्पन्नास्तर्हि शालयः सम्पत्स्यन्त इति वा । प्राप्ता नौः, तीर्णा तर्हि नदी तरिष्यत इति वा ॥

लिङ्लोटावाशिषि ॥ २७८ ॥

आशिषि विषये भविष्यत्यर्थे वर्तमानाद् धातोर्लिङ्लोटौ प्रत्ययौ भवतः। आशंसनमाशीः इष्टस्यार्थस्य प्रा(प्तिरि? प्तुमि)च्छा। चिरं जीव्याद् भवान्। चिरं जीवतु भवान्। भद्रं मे भूयात्। भद्रं मे भवतात्॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां प्रथमस्याध्यायस्य चतुर्थः पादः॥

प्रथमाध्यायः समाप्तः॥

---

शुभं भूयात्॥

# स्मृतवाक्यानि ।

# सूत्रानुक्रमणी ।

५

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kalidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śaṅkara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapañcahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkāra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavicara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No 59—नागानन्दम् **Nagananda** (Nataka) by Harsadeva with the commentary Vimarsini of Sivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhattaraka with the commentary of Raghavananda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Krsnânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhâravi with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidâsa with the commentary Pradīpa of Daksinâvartanâtha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyana with the commentary Vimarśinī of Sankara (Part I, 1–6 Patalas) (*out of stock*). | 3 | 4 | |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikâ of Śrī Kumâra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyana with the commentary Vimarśinī of Śankara (Part II, 7—12 Patalas) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1-5 Ullâsâs). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary **Kasika** of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddadīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhaṭīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattila-muni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddha-śrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva.** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartanda-vijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः **Nyayasara** with the commentary of Vasudevasūri. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatiya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111– हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara, | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilopakhyana.** (Sangīta) by H. H. Svāti Srī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Māharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkara) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II) 2nd Adhyaya in Ist Aṣṭaka. | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadiya** (Vyākaraṇa) with the commentary Prakīrṇakaprakāśa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikantabharana** by Bhojadeva with the commentary of Śrī Narayana Daṇḍanātha. | 1 | 8 | 0 |

***Apply to:—***

*The Curator*
*for the publication of Oriental Manuscripts,*
*Trivandrum.*